तुहंन्दु । युष्माकं पुं ॥ तुहंन्जू । युष्माकं स्त्री ॥ स्हंन्दु स्हंन्जू प्रत्ययौ । एकत्र सश्च ( सू०१० ) इति । अपरत्र स्लोपः स्त्रियां सर्वत्र ( सू०२।१।४० ) इति स् लोपः । अनेन हिलोपः वकारस्य उत्वं च ॥

## ॥ असेराद्यन्तस्वरयोर्लोपाकारावुनुञोः ॥१९॥

ब्वह् शब्दस्य बहुत्वे नियतस्य असिपदस्य उनु ञ् इत्येतयोः परयोरादिस्वरस्य लोपः अन्त्यस्वरस्य चाकारो भवति ॥ सोनु । अस्माकम् । एकवचनम् ॥ सानि । अस्माकम् । बहुवचनम् ॥ ब्वह् शब्दात् उनु नि प्रत्ययौ । त्वंह्वस्यौ बहुत्वे ( सू० १५ ) इति असि आदेशः । अनेनाकारस्य लोपः । इकारस्य च अकारः । एकत्र प्रत्ययादेरोत्पुंसि ( सू० १३ ) उकारस्य ओकारः । षष्ठ्यामन्त्यस्वरस्य (सू० ११) इत्यादिना अकारलोपः । अपरत्र स्त्रियामाकारः पुंबहुत्वे च ( सू०१२ ) इति आकारः । स च इदन्तत्वादप्रसिद्धः (सू०२।१।७०) ॥ एवं । सान् । अस्माकम् । एकवचनं स्त्रीलिङ्गवाचकम् ॥ साञ । अस्माकम् । बहुवचनं स्त्रीलिङ्गवाचकम् ॥ साधनं पूर्ववत् ॥

## ॥ प्राणिनि मिलोपो वा सकारे ॥ २० ॥

प्राणिवाचिनां तदादिशब्दानां सकारे परे मिकारस्य विकल्पेन लोपो भवति ॥ तस् । तम् वा तस्य ॥ तमिस् । तम् वा तस्य ॥ तसंन्दु । तस्य ॥ तमि संन्दु । तस्य ॥ सुह् शब्दात्स्प्रत्ययः । उभयेषाम् ( सू०५ ) इति तम् आदेशः । स्प्रत्यये इकारागमः ( सू०१७ ) । अनेन एकत्र मिलोपः ॥ एवं । यस् । यम् वा यस्य ॥ यमिस् । यम् वा यस्य ॥ यसंन्दु । यस्य ॥ यमि संन्दु । यस्य ॥ कस् । कम् वा कस्य ॥ कमिस् । कम् वा कस्य ॥ कसंन्दु । कस्य ॥ कमि संन्दु । कस्य ॥

इम् हुम् शब्दयोः संबन्धषष्ठ्यामेव । इसन्दु । अस्य ।। इमिसन्दु अस्य ।। हुसन्दु । अमुष्य ।। हुमि सन्दु । अमुष्य ।। असन्दु । अस्य ।। अमि सन्दु । अस्य ।।

बहुत्वे तु सर्वेषां मन् इत्यस्य विकल्पेन लोप इष्यते ।। तिहन्दु वा तिमन् हन्दु । तेषाम् ।। यिहन्दु वा यिमन् हन्दु । येषाम् ।। कहन्दु वा कमन् हन्दु केषाम् ।। इहन्दु वा इमन् हन्दु । एषाम् ।। हुहन्दु वा हुमन् हन्दु । अमीषाम् ।।

संबन्धषष्ठ्यां किम् । इमिस् । इमं वा अस्य ।। हुमिस् । अमुं वा अमुष्य ।। अत्र विकल्पाभावः ।। प्राणिनि किम् । तम्युक् । तस्य वस्तुनः ।।

## ॥ निश्चयार्थे धातुलिङ्गस्वरूपान्ते यः प्रत्यययोर्मध्ये वा ॥ २१ ॥

धातुस्वरूपस्य वर्तमानादिषु लिङ्गस्वरूपस्य च प्रथमादिषु तद्धितादिषु च निश्चयार्थे गम्यमाने अन्ते यः प्रत्ययो भवति । द्वयोः प्रत्यययोर्मध्ये वा भवति ।। तसन्दुय् । तस्यैव ।। तमि सन्दुय् । तस्यैव ।। ग्वरसूय् अन्दर् । गुरावेव ।। ग्वरनुय् अन्दर् । गुरुष्वेव ।। एवं सर्वेषां लिङ्गानां सर्वासु विभक्तिषु बोध्यम् ।। प्रत्यययोर्मध्ये यथा ।। ग्वरनुय् हन्दि पुछ्य् । गुरुभ्य एव ।। ग्वर सन्दिय् पुछ्य् । गुरवे एव ।। अत्र एकवचने स् प्रत्ययस्य लोपे कृते सन्दु पुछ्य् इत्येतयोर्मध्ये य् प्रत्ययः ।। ग्वरन् हन्दिय् पुछ्य् । वा ग्वरन् हन्दि पुछिय् । इत्यपि साधु ।। तद्धितप्रत्ययेभ्यो यथा । गाटलुय् । दक्ष एव ।। धातुस्वरूपेभ्यो यथा । करानुय् छुह् । करोत्येव ।। कर्योनुय् । अकृतैव तेन ।। करिय् करिष्यत्येव ।। उपमायामपि क्वचिद्व्यवह्रियते । यथा चाद् ति गोव् न्यचिवुय् । शिष्यो ऽपि पुत्र एवास्ति ।।

## ॥ सोरुशब्दस्वरूपेभ्यो नित्यमेव ॥ २२ ॥

सोरु शब्दस्य यानि स्वरूपाणि तेभ्यः प्रायशो नित्यमेव य् प्रत्ययो भवति ॥ सोरु। सर्वः ॥ सोरुय्। सर्व एव ॥ सारि । सर्वे ॥ सारिय् । सर्वे एव ॥

## ॥ यप्रत्यये औकारस्याव् ॥ २३ ॥

प्रत्ययसंबन्धिन औकारस्य य् प्रत्यये परे अव् भवति ॥ गुर्यवूय् सूतिन् । घोटकैरेव ॥ नमवूय् सूतिन् । नखैरेव ॥ गुर्यौ सूतिन् । नमौ सूतिन् इत्यनयो-र्मध्ये य् प्रत्यये कृते अनेन औकारस्य अव् । व्यञ्जनं परेण संधेयम् (सू० १।३) ॥

## ॥ व्याख् शब्दस्य बिय् प्रथमाबहुत्वादिषु ॥ २४॥

स्पष्टम्॥ बिय् । अपरे ॥ बियन् । अपरान् ॥ बियौ । अपरैः ॥ अनेन बिय् आदेशे कृते व्यञ्जनान्तलिङ्गवत्साधनम् ॥

## ॥ कूतुशब्दस्योपधायाः प्रथमाबहुत्वे द्वितीयाद्येकवचनादिषु चाप्रसिद्धता ॥ २५ ॥

स्पष्टम् ॥ कूति । कियन्तः ॥ कूतिस् । कियन्तम् ॥ कूति । कियता ॥

## ॥ बहुत्वे वैत्वम् ॥२६॥

कूतु शब्दस्य द्वितीयादिबहुत्वे वा ऐत्वं भवति विकल्पेनाप्रसिद्धता च ॥ कूत्यन् । कियतः ॥ कैत्यन् । कियतः ॥ कूत्यौ सूतिन् । कियद्भिर्हेतुभिः ॥ कैत्यौ सूतिन् । कियद्भिर्हेतुभिः ॥ एवं सर्वत्र विज्ञेयम् ॥

## ॥ य्यूतुत्यूतुयूतुशब्दानामीत्वमप्रथमैक-वचने ॥२७॥

प्रथमैकवचनं वर्जयित्वा एषां शब्दानां यूकारस्य ईत्वं भवति ॥ यीति । यावन्तः ॥ तीति । तावन्तः । ईति । इयन्तः ॥ एवं सर्वत्र ज्ञेयम् ॥

## ॥ मूँष ऐत्वम् ॥२८॥

मूँष् शब्दोपधायाः प्रथमाबहुत्वादिषु ऐत्वं भवति ॥ मैँष । महिष्यः ॥ मैँषन् । महिषीः ॥ मैँषौ सूतिन् । महिषीभिः ॥

## ॥ कूँह्रो ऽन्त्यस्य सश्च ॥२९॥

कूँह् शब्दस्य उपधाया ऐत्वं भवति अन्त्याक्षरस्य च सकारो भवति ॥ कैँसि दप् । कंचिद्वद ॥ कैँसि दपु । केनचिदुक्तम् ॥ कैँसि इन्दु । कस्यचित् ॥ इत्यादि । साधनं पूर्ववत् ॥ कूँह्शब्दापरपर्यायस्य काँह् शब्दस्य चेत्थं बोध्यम् । किंचानयोः शब्दयोरुभयलिङ्गत्वात् द्वितीयायां स् प्रत्ययः । स्त्रियामिकार (सू० २।१।३७) इति इकारागमः । स्लोपः स्त्रियां सर्वत्र (सू० २।१।४०) इति स् लोपः ॥

## ॥ केन्च् शब्दो नित्यं बहुत्वे ॥३०॥

स्पष्टम् ॥ केन्च् । कंचित् ॥ केन्चन् । कांश्चित् ॥ केन्चौ । कैश्चित् ॥

## ॥ काँछाह् कैँछाह् शब्दावेकत्वे ॥३१॥

स्पष्टम् ॥ काँछाह् । कश्चित् ॥ कैँछाह् । किंचित् ॥

## ॥ ज़्ह् शब्दस्य द्व द्वितीयादिषु ॥३२॥

द्विवाचकस्य ज़्ह् शब्दस्य द्वितीयादिविभक्तिषु द्व आदेशः स्यात् ॥ द्वन् । द्वौ ॥ द्वयौ सूतिन् । द्वाभ्याम् ॥

## ॥ अयागमः स्वरे ॥३३॥

तस्मादादेशकृतात् द्वशब्दात्स्वरे परे अयागमो भवति ॥ द्वयि सूतिन् । द्वयेन ॥ द्वयौ सूतिन् । द्वाभ्याम् ॥ ज़्ह् शब्दात् औ सूतिन् प्रत्ययः । पूर्वसूत्रेण द्व आदेशः । अनेन अय् आगमः । व्यञ्जनं परेण संधेयम् ( सू० १।३ ) ॥

## ॥ त्रिह्षहोरन्त्यलोपश्च ॥३४॥

त्रिह् षह् शब्दाभ्यां स्वरे परे अयागमो भवति । अन्त्याक्षरस्य च लोपो भवति ॥ त्र्ययौ सूतिन् । त्रिभिः ॥ षयौ सूतिन् । षड्भिः ॥

## ॥ वा च़ोर्शब्दस्य न्प्रत्यये ह्रस्वश्च ॥३५॥

च़ोर् शब्दस्य न्प्रत्यये परे विकल्पेनान्त्याक्षरस्य लोपः ओकारस्य च उकारो भवति ॥ चुवन् । चतुरः । वा । च़ोरन् । चतुरः ॥ च़ोर् शब्दात् द्वितीयायां न् प्रत्ययः अनेन रकारलोपः ओकारस्य च उकारः । उकारो वः (सू० १।११) इति वत्वम् । व्यञ्जनं परेण संधेयम् (सू० १।३) । अन्यत्र न्प्रत्यये (सू० २।१।१२) अकारागमः ॥

## ॥ पानशब्दादिप्रत्ययलोपः ॥३६॥

अयं शब्दो नित्यमेकवचन एव । देहार्थवाचकस्य पान् शब्दस्य तु एकानेकत्वं भवति ॥ पान । स्वयम् ॥ पानस् । स्वम् ॥ पान । स्वेन ॥

## ॥ अकारलोपोपधाह्रस्वौ चोनुञो: ॥३७॥

तस्यैव पानशब्दस्य उनु ञ् इत्येतयोः प्रत्यययोः परयोरकारस्य लोप उपधायाश्च ह्रस्वो भवति ॥ पनुनु । स्वस्य पुंलिङ्गे ॥ पनंञ् । स्वस्य स्त्रीलिङ्गे ॥ साधनं पूर्ववत् ॥ देहार्थवाचकस्य पान् शब्दस्य । पानुकु । देहस्य पुंलिङ्गे ॥ पानंचू । देहस्य स्त्रीलिङ्गे ॥ इत्यादिस्वरूपाणि भवन्ति ॥

## ॥ अखुजोरयोराहागमो निश्चयसामान्ये ॥३८॥

अखुशब्दात् द्विवाचकाज्जोरशब्दाच्च निश्चयसामान्ये गम्यमाने आह् आगमो भवति ॥ अखाह् । एककः ॥ ज़ोराह् । द्विकम् ॥ अखुशब्दस्य प्रथमायामेव विज्ञेयम् । अपरस्य सर्वासु विभक्तिषु । अखुशब्दग्रहणात्प्रथमैकवचनान्तेभ्यः सर्वेभ्यः शब्देभ्यो भवति ॥ कथाह् । एक आलापः ॥ ज़ोराहौ सूंतिन् । द्विकेन ॥

## ॥ त्रिहस्तारादेशः ॥ ३९ ॥

निश्चयसामान्ये त्रिह्शब्दस्य तार आदेशो भवति ॥ तार । त्रिकम् ॥ निश्चयसामान्ये किम् । त्रिय् । त्रय एव ॥

## ॥ चोरश्च्वमरः ॥ ४० ॥

च़ोर् शब्दस्य च़्वमर आदेशो भवति निश्चयसामान्ये ॥ च़्वमर । चतुष्कम् ॥ निश्चयसामान्ये किम् । च़ोरय् । चत्वार एव ॥

## ॥ पान्चः पैँशः ॥ ४१ ॥

पान्च्शब्दस्य पैँश आदेशो भवति निश्चयसामान्ये ॥ पैँश । पञ्चकम् ॥ निश्चयसामान्ये किम् । पान्चय् । पञ्चैव ॥

## ॥ षहो ऽन्त्यस्य खाह् ॥ ४२ ॥

षह्शब्दस्यान्त्याक्षरस्य खाह् आदेशो भवति निश्चयसामान्ये ॥ षखाह् । षट्कम् ॥ निश्चय[illegible]मान्ये किम् । षय् । षडेव ॥

## ॥ सतष्ट एठागमश्च ॥ ४३ ॥

सत्शब्दस्यान्त्याक्षरस्य टकारो भवति एठ आगमश्च निश्चयसामान्ये ॥ सटेठ । सप्तकम् ॥ निश्चयसामान्ये किम् । सतय् सप्तैव ॥

## ॥ ऐठादिभ्यो ऽमरागमश्च ॥ ४४ ॥

ऐठ्आदिभ्यः संख्याभ्यो निश्चयसामान्ये अमर आगमो भवति ॥ ऐठमर । अष्टकम् ॥ नवमर । नवकम् ॥ दहमर । दशकम् ॥ निश्चयसामान्ये किम् ॥ ऐठय् । अष्टावेव ॥ नवय् । नवैव ॥

## ॥ एकत्वनिर्दिष्टपरिमाणादिशब्दात्खण्डा च ॥४५॥

एकवचनेन निर्दिष्टो यः संख्यापरिमाणादिशब्दस्तस्मान्निश्चयसामान्ये खण्डा प्रत्ययो भवति । चशब्दात् आह् आगमो ऽपि भवति ॥ अखाह् खण्डा । एकमात्रम् ॥ चाखाह् खण्डा । चतुष्टयमात्रम् ॥ दहाह् खण्डा । दशकमात्रम् ॥ हथाह् खण्डा । शतमात्रम् ॥ क्रुहाह् खण्डा । क्रोशमात्रम् ॥ द्वहाह् खण्डा ।

दिनमात्रम् ॥ ऋंथाह् खण्डा । ऋतुमात्रम् ॥ रुपयाह् खण्डा । मुद्रिकामात्रम् ॥ एकत्वनिर्दिष्टात्किम् ॥ तार । त्रयः ॥ च्वमर । चत्वारः ॥ चोराह् खण्डा । इति तु न भवति ॥ चाख्शब्दस्य त्वेकत्वनिर्देशाद्भवत्येव । परं तु यत्रैव आह् आगमो भवति तत्रैव खण्डा प्रत्ययः सस्वरः स्यात् । यत्र तु केवलः स्यात्तत्र खण्ड् प्रत्ययो भवति । यथा । क्रुह् खण्ड् । क्रोशमात्रम् ॥

## ॥ सर्वेभ्यो बहुवचनान्तेभ्यो ज़ू ॥ ४६ ॥

बहुवचनान्तेभ्यः सर्वेभ्यः शब्देभ्यो निश्चयसामान्ये ज़ू प्रत्ययो भवति । कटंज़ू । मेषाः ॥ गुरिज़ू । अश्वाः ॥ रुपयंज़ू । रूपिकाः ॥ कन्नंज़ू । शिलाः इत्यादि ।

इति शारदाक्षेत्रभाषाव्याकरणे कश्मीरशब्दामृते
लिङ्गप्रकरणे सर्वनामपादस्तृतीयः ॥ ३ ॥
समाप्तं चेदं लिङ्गप्रकरणम् ॥२॥

# अथ समासप्रक्रिया ॥३॥

शब्दाः संज्ञाविभक्त्यव्ययधातुभेदाच्चतुर्धा भवन्ति ॥ तत्र विभक्तिः केवलं स्वयमर्थदानाभावात्संज्ञया संगत्य कारकार्थं जनयति । धातुना च संगत्यातीतादिकालबोधिनी क्रिया भवतीति ॥ अव्यया हि स्वार्थदाने विभक्तिनिरपेक्षा इति ॥ विभक्तियोगात्संपन्नयोः क्रिययोर्वक्ष्यमाणसमासरीतिवत्संयोगो ऽसंभाव्यो ऽस्ति किंत्वव्ययभूतैः कृत्प्रत्ययैरेवेति ॥ संज्ञा तु विशेष्यपदविशेषणपदभेदाद्द्विविधा । तत्र द्वयोर्विशेष्यपदविशेषणपदयोः परस्परसंयोगो युक्तः विशेष्याद्विशेषणस्य बहिरनवस्थानादिति । विशेष्ययोस्तु पदयोः संयोगः कदाचित्संभाव्यः स्यात् । संयोगसंभवे तु पदे विशेष्ये वा भवतां । विशेष्यविशेषणे वा भवतामिति तुल्यमस्ति । कदाचित्त्वसंभाव्यः । इति द्वे स्वरूपे । तयोस्तु तुल्यातुल्यविभक्तिसंयोजनया चत्वारि स्वरूपाणि भवन्तीत्यतः समासाश्चत्वार एव भवितुमर्हन्तीत्येतदर्थं युक्तायुक्तेति समासलक्षणं सूत्रयति ॥

## ॥ युक्तायुक्तपदविभक्तीनां संगतिकृत्समासः ॥१॥

युक्तानां योग्यानामयुक्तानामयोग्यानां पदानां विभक्तीनां च संगतिकृत्संयोगकारकः समासो ऽवगन्तव्यः ॥ तत्रायुक्तपदसमविभक्तीनां संधायको द्वन्द्वः ॥ युक्तपदसमविभक्तीनां योगकारी कर्मधारयः ॥ युक्तपदभिन्नविभक्तीनां संधायकस्तत्पुरुषः ॥ अयुक्तपदायुक्तविभक्तीनां संयोगकारको बहुव्रीहिरिति ॥ संबन्धसंज्ञायां समासे विशेषः । तत्र संबन्धसंज्ञा द्विविधा ॥ एका

सामान्यसंबन्धसंज्ञा । द्वितीया विशेषसंबन्धसंज्ञा ॥ तत्र तदादिशब्दाः सामान्यसंबन्धसंज्ञकाः ॥ यथैकस्मिन्नेव मनुष्ये स्वयं वक्तरि सति अहमिति संज्ञा कथ्यते ॥ तस्मिन्नेव श्रोतृतया संनिधिस्थेन येन केनचित्प्रोक्ते त्वमिति संज्ञा ॥ अश्रोतृतया संनिधिस्थेन प्रोक्ते अयमिति संज्ञा ॥ असंनिधिस्थेन येन केनचित्प्रोक्ते स इति संज्ञा ॥ द्वापरतया क इति संज्ञा ॥ सामान्यतया य इति संज्ञा । इति सामान्यसंबन्धसंज्ञा । अत्र संबन्धषष्ठीतत्पुरुषं विना समासाबाप्तिर्नावधार्येति ॥ विशेषसंबन्धसंज्ञापि सामान्यविशेषाभ्यां द्विविधा ॥ तत्राद्या शिल्पवशात्सूपादिसंज्ञा तस्मिन्सूपत्वशिल्पस्य समवायिसंबन्धान्न हि तदादिशब्दवदेकेन सूप इत्युच्यते अपरेण स्वर्णकार इत्युच्यत इति विशेषत्वम् । परं तु सर्वैः सूप इत्युच्यत इति सामान्यत्वमिति ॥ अपरा पितृपुत्रादिवत्संबन्धसंज्ञा ॥ यथा हे पितरिति पुत्रेणैव कथ्यते बैजिकसंबन्धात् नान्येन ॥ स एव सहोदरेण भ्रातेति कथ्यते समानोदर्यत्वात् ॥ इत्यादयो विशेषसंबन्धसंज्ञकाः ॥ अत्र समासावाप्तिर्धीमद्भिरवधार्या इति ॥

द्वन्द्वोदाहरणं यथा ॥ ताफ् गट । आतपान्धकारौ ॥ अत्रातपेन साकं न को ऽपि ध्वान्तस्य संबन्धः किंतु समविभक्तित्वात् द्वन्द्वेन संबन्धः संपन्नः ॥

कर्मधारयोदाहरणं यथा ॥ स्थटि गुरि सूतिन् गौव् । स्थूलघोटकेन गतः ॥ अत्र य एव स्थूलः स एव घोटक इति युक्तपदत्वम् । स्थूलेन घोटकेन गत इति समविभक्तित्वामित्यतः कर्मधारयेण संगतिः ॥

तत्पुरुषोदाहरणं यथा ॥ राज़् न्यच्युत्थु । राजपुत्रः ॥ अत्र राज्ञा सह पुत्रस्य योग्यत्वे ऽपि राज्ञः पुत्र इत्यनयोर्भिन्नविभक्तित्वमित्यतस्तत्पुरुषेण संगतिः ॥

बहुव्रीह्युदाहरणं यथा ॥ हूनि बुथु । श्वमुखः ॥ अत्र श्वन्शब्दमुखशब्दयोर्न च योग्यत्वसंबन्धः नापि श्वन्मुखं यस्य स श्वमुख इति निरुक्त्या विभक्तिसंबन्ध इत्यतो बहुव्रीहिना संगतिः ॥

## ॥ समासमध्ये विभक्तिलोपो व्यञ्जनाद्यवयवस्य ॥ २ ॥

समासे कर्तव्ये पदयोर्मध्ये या विभक्तिस्तस्या व्यञ्जनाद्यवयवस्य लोपो भवति । "एको ह्यवयवो यस्य को ऽसावयवी भवेत्" इति कथनान्न केवलव्यञ्जनरूपप्रत्ययस्य लोपः स्यात् ॥ छत्यौ गुर्यौ सूंतिन् आव् । श्वेतघोटकैरागतः ॥ नीलिस् गुरिस् । अत्र स् प्रत्ययस्य केवलत्वान्न लोपः । छंतु शब्दाद् गुरु शब्दाद्य औ सूंतिन्प्रत्ययः अनेन मध्यविभक्तेः सूंतिन् इति विभक्त्यवयवस्य लोपः । प्रत्ययलोपे प्रत्ययलक्षणम् (पा० सू० १।१।६२) इति उवर्णान्तानामिकारः (२।१।३०) इति यत्वम् ॥

## ॥ सजातीयविभक्तिकानां विजातीयपदानामन्त्यपदविभक्त्या कथनं द्वन्द्वः ॥३॥

येषां वस्तूनां लोकेषु संयोगो ऽसंभाव्यो ऽपि स्यात्तेष्वपि शब्देषु तुल्यविभक्तिकेषु सत्सु स्वकल्पितस्यान्त्यपदस्य विभक्त्या तेषां कथनं द्वन्द्वसमासो विज्ञेयः ॥ नब् नम्ब् फल् । नभोनखफलम् ॥ एषां पदानां यद्यपि संयोगो ऽसंभाव्यो ऽस्ति तथाप्यनेन संगतिः ॥ वारि कुलि फल ज़ल पुछ्य् आव् । वाटिकावृक्षफलजलायागतः ॥ वारुशब्दात् कुलुशब्दात् फल्शब्दात् ज़ल्शब्दाच्च इ पुछ्य् प्रत्ययः । समासमध्ये (सू० २) इति सूत्रेण मध्यमानां पुछ्य् इति प्रत्ययावयवानां लोपः । प्रथमयोरुवर्णान्तानामिकार (सू० २।१।३०) इति ऊकारोकारयोरिकारः । इतो लोप (सू० २।१।६) इति इप्रत्ययस्य लोपः । अपरयोर्व्यञ्जनान्तत्वादिकारस्याकारः (२।१।४)॥ माज्य कोर्य । मातापुत्रिके ॥ मालि पुथ्र् । पितापुत्रौ ॥ हश न्वष । श्वश्रूस्नुषे ॥ ज़ोम् काकञ़ । ननन्दाप्रजावत्यौ ॥ पच्छ कूच्य । पङ्क्तिकादारुणी ॥

## ॥ विशेषणविशेष्ययोः पूर्वोत्तरपदस्थयोरेकपदे-नाभिधानं कर्मधारयः ॥४॥

विशेष्यविशेषणयोर्योग्यसंबन्धत्वाद्युक्तपदत्वं विशेष्याद्बहिर्विशेषणस्यानवस्थानात् तयोः समविभक्तित्वमपि नित्यमेव स्यात्तयोर्विशेषणे पूर्वपदस्थे विशेष्ये उत्तरपदस्थे सति एकविभक्त्या यत् कथनं स कर्मधारयसमासो विज्ञेयः ॥ बड्यन् द्यारन् छुह् ज़ेनान् । महद्द्रव्याण्यर्जयति ॥ म्बचि ट्रचि सूतिन् । स्थूलपूपेन ॥ त्रिछि कोरि पुछ्य् । दक्षकन्यायै ॥ बजि लरि प्यठ । महद्गृहात् ॥ बज्य ग्रेन्ज़ हेन्दु । महत्संख्यायाः ॥ बडिस् गुरिस् प्यठ् । महदश्वोपरि । अत्र प्रथमान्त्ययोः न् स् प्रत्यययोः केवलत्वान्मध्ये ऽपि न लोपः । किंतु न् प्रत्यये सर्वत्र (सू० २।१।१२) इति अकारागमः । उवर्णान्तानामिकार (सू० २।१।३०) इति सर्वत्र इकारः । ऊदन्तटवर्ग (सू०२।१।२२) इत्यादिसूत्रेण क्रमेण टवर्गान्तस्य चवर्गः । शेषं पूर्ववत् ॥

## ॥ अप्रथमान्ते पूर्वपदे विभिन्नविभक्तिकयोः पद-योर्युगपत्कथनं तत्पुरुषः ॥५॥

संभाव्यसंयोगसत्ताकयोः पदयोर्मध्यात्प्रथमाविभक्तिव्यतिरिक्ते पूर्वपदस्थे सति तुल्यातुल्यप्रथमादिविभक्तिके उत्तरपदस्थे तयोर्युगपत्कथनं स तत्पुरुषसमासो बोध्यः ॥ श्राकि खश् । छुरिकाच्छेदः ॥ टोपि फलु । शिरस्त्रप्रान्तम् ॥ सर्प बय सूतिन् । सर्पभयेन ॥ राज़ न्यचिवि पुछ्य् । राजपुत्राय ॥ बट कोर्य हेन्दु । ब्राह्मणकन्यायाः ॥ स्वन डब अन् । स्वर्णपुटकमानय ॥ म्यचि फूतु थव् । मृत्कटोलं निधेहि ॥

## ॥ उत्तरपदस्थस्य पोज़ुशब्दस्य पो वः ॥६॥

समासविषये पोज़ुशब्द उत्तरपदस्थे सति पोज़ु शब्दसंबन्धिनः पकारस्य

वकारः स्यात्॥ गंग वोञ्जु। गङ्गाजलम्॥ व्यथ वोञ्जु। वितस्ताजलम्॥ शीन वो-ञ्जु। हिमजलम्॥ बुग वोञ्जु। ओघजलम्॥ मार् वोञ्जु। मारीजलम्॥ क्रीरि वो-ञ्जु। कूपपानीयम्॥ रूद वोञ्जु। वर्षापानीयम्॥ नाग वोञ्जु। अखातजलम्॥ समासे किम्। व्यथि हन्दि पाञ्जि सूंतिन्। वितस्तायाः पानीयेन॥

## ॥ पूर्वपदस्थे ञस्यानुस्वारः ॥७॥

समासविषये पोञ्जुशब्दे पूर्वपदस्थे सति ञकारस्यानुस्वारो भवति॥ पाँ लव्। पानीयद्रोणः॥ पाँ नंट्ठ। पानीयकुम्भः॥ समासे किम्। पाञ्जुक्‌ त्रख्। पानीयस्य द्रोणः॥

## ॥ दाञ्शब्दस्यापि ॥८॥

समासविषये दाञशब्दे पूर्वपदस्थे सति ञकारस्यानुस्वारो भवति॥ दाँ खार्। धान्यखारी॥ दाँ फ्रुटु। धान्यकटोलः॥ अपिशब्दादन्येभ्यो ऽपि॥ वाँ धंलु। वणिक्कूणं॥ वाँ कूरू। वणिक्कन्या॥ समासे किम्। दाञ्चू खार्॥

## ॥ पंथ्र्शब्दस्य पुंलिङ्गे च ॥९॥

पंथ्र्शब्दः स्वयं पुंलिङ्गः समासे ऽपि पुंलिङ्गेन निर्देशे कर्तव्ये पकारस्य वकारो भवति॥ बोञ्जि वंथ्र् [। छायावृक्षपत्रम्]॥ पोष वंथ्र् [। पुष्पपत्रम्]॥ ख्यल्ल वंथ्र्। पत्रतृणपत्रम्॥ हाक वंथ्र्। शाकपत्रम्॥ पुंलिङ्गेन किम्। मुजि पंत्र्। मूलिकापत्रम्॥ गुग्जि पंत्र्। इत्यादि॥

## ॥ पंञाहः समासे ॥१०॥

समासविषये पंञाह्शब्दस्य पकारस्य वकारो भवति॥ अकवञ्जाह॥ द्ववञ्जाह्। कुनवञ्जाह्। इत्यादि॥

## ॥ शैठः शस्य हः ॥११॥

कुनहैठ्। अकहैठ्। द्वहैठ्। इत्यादि ॥

## ॥ छ्वंट्‌शब्दस्य म्वंड्‌ आदेशः सस्यव्यतिरिक्ते ॥१२॥

सस्यव्यतिरिक्तस्य वस्तुनः अपूपार्थके छ्वंट्‌शब्दे उत्तरपदस्थे म्वंड्‌ आदेशो भवति ॥ ठूल-म्वंड्‌। अण्डापूपः ॥ नदूरि-म्वंड्‌। बिसापूपः ॥ ग्रामंज्-म्वंड्‌। आमिक्षापूपः ॥ अद्रक-म्वंड्‌। आद्रकापूपः ॥ सस्यव्यतिरिक्ते किम् ॥ त्वमुल-छ्वंट्‌। तण्डुलापूपः ॥ कनक-छ्वंट्‌। गोधूमापूपः ॥ वुष्कि-छ्वंट्‌। यवापूपः ॥ सस्ये ऽपि पुंलिङ्गनिर्देशेन म्वंड्‌ आदेश इष्यते ॥ त्वमुल-म्वंड्‌। अब-म्वंड्‌। इत्यादि ॥

## ॥ पूर्वोत्तरपदस्थभेद्यभेदकोभयविशिष्टान्यपदबोधको बहुव्रीहिः ॥१३॥

विशेष्ये पूर्वपदस्थे विशेषणे चोत्तरपदस्थे सति तदुभयेन विशिष्टस्यान्यपदस्य ज्ञानविधायको बहुव्रीहिर्ज्ञेयः ॥ यड-बंड्‌। बृहदुदरः ॥ दारि-ज्यूठ्‌। दीर्घश्मश्रुः ॥ कन-च्वट्‌। छिन्नकर्णः ॥ दु-वहॅर्। द्विवार्षिकः ॥ दु-वरिश्। द्विवार्षिकी ॥ सत-वोचु। सप्तकुटुम्बः ॥ पाँच्-प्वतुर्। पञ्चपुत्रः ॥ हूनि-बुथ्। श्वमुखः ॥ अत्र मध्यपदलोपो बुद्धिमतावधार्यः ॥

## ॥ द्विरुक्तेन च ॥१४॥

एकेनैव पदेन द्विरुक्तेन विशिष्टस्यान्यपदस्यावबोधकश्च बहुव्रीहिर्विज्ञेयः ॥ स च स्त्रीलिङ्गः ॥ ठ्वल ठ्वल्। शृङ्गाशृङ्गि ॥ टप टफ्। खुराखुरि ॥ ठूँक ठूँख्। शृङ्गाशृङ्गि ॥ चप चफ्। दन्तादन्ति ॥

इति श्रीशारदाक्षेत्रभाषाव्याकरणे कश्मीरशब्दामृते समासप्रक्रिया समाप्ता ॥३॥

# अथ तद्धितप्रक्रिया ॥४॥

## ॥ जातेरपत्यार्थे पूतु ॥१॥

अपत्ये ऽभिधेये सति जातेर्जातिवाचकाच्छब्दात् पूतु प्रत्ययो भवति ॥ दर-पूतु । कौल-पूतु । तिक्कि-पूतु । इत्यादि ॥ दर् कौल् त्युकु इति जातिवाचकाः शब्दाः । अनेन सूत्रेण पूतु प्रत्ययः । व्यञ्जनान्तानामकारागमः ( सू०२।१।३६ ) । तृतीये युकारोपधाया इत्वम् ( सू०२।१।७६ ) । उवर्णान्तानामिकारः ( सू० २।१।३० ) एवमुत्तरत्र ज्ञेयम् ॥ जातिशब्दग्रहणात्पशुपक्ष्यादीनां जातिर्गृह्यते ॥ काव-पूतु । काकपोतः ॥ पछिन्-पूतु । पक्षिपोतः ॥ ककर्-पूतु । कुक्कुटपोतः ॥ कट-पूतु । मेषपोतः ॥ ग्याँ-पूतु । मेषपोतः ॥ कोतर्-पूतु । कपोतपोतः ॥ इत्यादि ॥

## ॥ न संज्ञायाः ॥२॥

पित्रादिनाम्नः परः पूतु प्रत्ययो न भवतीति परिभाष्यते ॥

## ॥ चूरशब्दाद्बालक्रीडायां च ॥३॥

पित्रादौ स्तनन्धयं क्रीडयति सति चूरशब्दात् पूतु प्रत्ययो भवति । च-शब्दाच्चौरपुत्रे ऽभिधेये ऽपि ॥ चूर-पूतु । चौरपोतः ॥

---

[१ ककर् कोतर् इत्यादीनि पदानि उकारान्तशब्दव्युत्पन्नान्यपि कछलादि ( सू० २ । १ । ७४ ) गणान्तर्गतत्वात्साधूनि विज्ञेयानि ॥ ]

## ॥ मिङ्शब्दात्स्वार्थे ॥४॥

चुम्बनवाचकात् मिङ्शब्दात्स्वार्थ एव पूतु प्रत्ययो भवति ॥ मिङ्-पूतु । चुम्बनम् ॥ मिङ् इत्यस्य म्बङ् च कथ्यते ॥ तेन । म्बङ्-पूतु । चुम्बनम् ॥ इत्यपि भवति ॥

## ॥ अनादरापत्यार्थेऽधमशब्देभ्यः कठ् ॥५॥

अनादरेण क्रोधेन च अपत्ये अभिधेये सति अधमशब्देभ्यः परः कठ् प्रत्ययो भवति ॥ चूर-कठ् । चौरपुत्रः ॥ गान-कठ् । विटपुत्रः ॥ पोग-कठ् । नाशपुत्रः ॥ धाज़-कठ् । सूदपुत्रः ॥ रास-कठ् । जारजः ॥ कु-कठ् । कुपुत्रः ॥ सुशब्दादपि दृश्यते ॥ स्व-कठ् । सुपुत्रः ॥ स्वख-कठ् । सुखपुत्रः ॥

## ॥ स्वस्वकार्योद्यमेनाभिधेये कंटु ॥६॥

जातिवाचकानां शिल्पवाचकानां च शब्दानां निजनिजकार्यस्योद्यमेनापत्ये अभिधेये सति कंटु प्रत्ययो भवति ॥ बट-कंटु । ब्राह्मणपुत्रः ॥ दर-कंटु । कौल-कंटु । स्वनुर्-कंटु । स्वर्णकारपुत्रः ॥ मनुर्-कंटु । शाङ्खिकपुत्रः ॥ छान-कंटु । तक्षकपुत्रः ॥

## ॥ मूँष्शब्दाच्च ॥७॥

महिषीवाचकस्य मूँष्शब्दस्यापत्ये अभिधेये कंटु प्रत्ययो भवति ॥ मैँष कंटु । महिषः ॥ मूँष्शब्दात् कंटु प्रत्ययः । व्यञ्जनान्तानामकारागमः (सू० २।१।३६) । मूँष ऐत्वम् (सू० २।३।२८) इति सूत्रेण ऊकारस्य ऐत्वम् ॥

## ॥ पित्रोः सहजापत्यीयसंबन्धे पुंसि तुट् ॥८॥

पित्रोर्जनयितुर्जनन्याश्च सहजौ पितृभ्राता पितृभगिनी मातृभ्राता मातृभगिनी च तयोः पुमपत्यसंबन्धिनि संबन्धे अभिधेये सति तत्तच्छब्दात् तुट् प्रत्ययो भवति॥ प्वफतुट् बोयु। पैतृष्वस्रीयः॥ मासतुट् बोयु। मातृष्वस्रीयः॥ मामतुट् बोयु। मातुलपुत्रः॥

## ॥ स्त्रियां तृट् ॥९॥

तेषामेव शब्दानां स्ऽयपत्यसंबन्धिनि संबन्धे अभिधेये सति तृट् प्रत्ययः स्यात्॥ प्वफतृट् ऽयत्र। पैतृष्वस्रीया॥ मासतृट् ऽयत्र। मातृष्वस्रीया॥ मामतृट् ऽयत्र। मातुलपुत्रिका॥

## ॥ पितृशब्दात्तृलोपः ॥१०॥

स्पष्टम्॥ पितुट् बोयु। पैतृऽयः॥ पितृट् ऽयत्र। पितृऽयपुत्री॥ एवं प्वफतृट् बांयि काकस्। पैतृष्वस्रीयभार्या॥ मासतृट् बांयि काकस्। मातृष्वस्रीयभार्या॥ मामतृट् बांयि काकस्। मातुलपुत्रभार्या॥ पितृट् बांयि काकस्। पैतृऽयभार्या॥

## ॥ ऽयस्रबोयुशब्दाभ्यां पुमपत्ये थृरन्त्ययोर्नबौ च ॥११॥

ऽयस्रबोयुशब्दयोः पुमपत्ये ऽभिधेये सति थृट् प्रत्ययो भवति अन्त्याक्षरयोश्च क्रमेण नकारबकारादेशौ भवतः॥ ऽयन थृट्। भागिनेयः॥ बाब थृट्। भ्रातृऽयः॥

## ॥ स्त्र्यपत्ये ज़ो नवौ च ॥१२॥

तयोर्व्यस्रबोयुशब्दयोः स्त्र्यपत्ये ऽभिधेये सति ज़ प्रत्ययो भवति अन्त्याक्षरयोश्च नकारवकारौ भवतः ॥ व्यनज़ । भागिनेयी ॥ बाव्ज़ । भ्रातृपुत्री ॥

## ॥ द्रियुशब्दस्य द्यारादेशश्च ॥१३॥

देवरवाचकस्य द्रियुशब्दस्य पुंस्त्र्यपत्ये ऽभिधेये पूर्वोक्तौ प्रत्ययौ भवतः । द्रियुशब्दस्य च द्यार आदेशः स्यात् ॥ द्यारथ् । देवरपुत्रः ॥ द्यारज़ । देवरपुत्री ॥

## ॥ तदस्यास्तीत्यलादयः ॥१४॥

तत् अस्ति अस्य इत्यस्मिन्नर्थे वक्ष्यमाणा अलादयः प्रत्ययाः स्युः ॥

## स्वमूर्तिवर्तमानद्रव्यगुणवत्त्वाभिधेये ऽल् ॥१५॥

प्राणिनो ऽप्राणिनो वा निजमूर्तौ वर्तमानं यद्द्रव्यं गुणो वा तद्वत्त्वेन तस्मिन्नभिधेये सति द्रव्यशब्दाद्गुणशब्दाच्च अल् प्रत्ययो भवति । न चात्र गुणशब्देन शुक्लादिगुणा गृह्यन्ते इति ॥ दार्यल् । श्मश्रुलः ॥ गौंछ़ल् । गुम्फवान् ॥ डखल् । काकपक्षवान् ॥ बचल् । स्तनवती ॥ कोछल् । कोष्ठवान् ॥ ह्यङ़ल् । शृङ्गी ॥ ठूँकल् । शृङ्गाघाती ॥ ठ्वलल् । शृङ्गाघाती ॥ च़पल् । दन्ताघाती ॥ फशल् । वेशवान् ॥ ग्यज़ल् । वलिनः ॥ स्यसल् । सीमावान् ॥ प्वंदल् । क्षुतवान् ॥ मछ्यस्य्चल् । तिलकालकः ॥ च़ासल् । कासवान् ॥ च़ूँटल् । पर्दी ॥ साधनं पूर्ववत् ॥

॥ ह्राचो ऽभियोक्तरि ॥१६॥

अभियोगकर्त्रर्थे ह्राच् शब्दादल् भवति न त्वभियोज्यार्थे॥ ह्राचल्। अभियोक्ता॥

॥ ज़्यवः सूचके ॥१७॥

ज़्यव् शब्दात्सूचकार्थे अल् प्रत्ययो भवति॥ ज़्यवल्। सूचकः॥ न तु जिह्वावान्। किंतु तत्र। ज़्यविसंस्तु। वा ज़्यविवोलु (सू० २४) इति भवति॥

॥ ब्यञ्कूरुशब्दाभ्यामश्लीले ॥१८॥

स्पष्टम्॥ ब्यञ्ल्। कोर्यल्॥ अश्लीले किम्। ब्यञ्नवोलु (सू० २४)। भगिनीवान्॥ कोरिवोलु। कन्यावान्॥

॥ दारुशब्दाद्यागमो वा ॥१९॥

स्पष्टम्॥ दारियाल्। श्मश्रुलः॥

॥ क्वचिल्लदपि ॥२०॥

द्रव्यगुणवत्त्वे ऽभिधेये सति क्वचित् लद् प्रत्ययो ऽपि भवति। स च प्रायो दोष एव॥ फकलद्। दुर्गन्धः॥ छ्वकलद्। विदग्धः॥ छ्वकलद्। व्रणी॥ बकलद्। भषणवान्॥ दुखलद्। दुःखी॥ द्रागलद्। दुर्भिक्षहतः॥ क्वचिद्ग्रहणात्। गोँछलद्। डखलद्। बबलद्। इति न भवति। किंतु ग्यञ्लद्। स्यसलद्। श्वासिलद्। इत्यादीनां द्वयमेव भवति॥

## ॥ फश उन्मादिनि ॥२१॥

फश्शब्दादुन्मत्तस्यार्थे लड् भवति ॥ फशलड् । उन्मत्तकल्पः ॥ अन्यत्र । फशल् । वेशकारी ॥

## ॥ पंजुअपंजुशब्दाभ्यां योड् ॥२२॥

आभ्यां शब्दाभ्यां सहितत्वे वाच्ये योड् प्रत्ययो भवति ॥ पंज़ियोड् । सत्यवक्ता ॥ अपंज़ियोड् । असत्यवक्ता ॥

## ॥ मंन्ज़्युम्शब्दाद्दूतार्थे ॥२३॥

दूतस्यार्थे मंन्ज़्युम्शब्दात् योड् प्रत्ययो भवति ॥ मंन्ज़्युम्योड् । दूतः ॥

## ॥ मूर्तिग्राह्यवस्तुवत्त्वे वोलुग्राकौ ॥२४॥

निजमूर्तैर्भिन्नैर्वस्तुभिः सहितत्वे अभिधेये ग्राक्वोलु प्रत्ययौ भवतः ॥ धारवोलु । धनवान् ॥ लरिवोलु । गृहवान् ॥ शायिवोलु । स्थानवान् ॥ कोरिवोलु । कन्यावान् ॥ न्यचिविवोलु । पुत्रवान् ॥ गुपन्वोलु । गोपशुवान् । इत्यादि ॥ एवं । लरिग्राख् । इत्यादिस्वरूपाणि भवन्ति ॥ गरशब्दस्य गृहाध्यक्षार्थे ऽकारलोप इष्यते ॥ गर्वोलु । गृहाधिपः ॥ अन्यत्र । गरवोलु । गृहवान् ॥

## ॥ जीवादिव्यथाकारिभ्यो हंतु ॥२५॥

यैर्यैरान्तरीयैर्बाह्यैर्वा वस्तुभिर्जीवादिनैव पीडा भुज्यते न तु देहेन तत्साहित्ये अभिधेये सति हंतु प्रत्ययः स्यात् ॥ न्यंदूरिहंतु । निद्राहतः ॥ त्रेषहंतु । तृषाहतः ॥ बुछहंतु । बुभुक्षाहतः ॥ क्रूदहंतु । क्रोधाहतः ॥ गुमहंतु । स्वेदाहतः ॥ तापहंतु । आतपाहतः ॥ तूरिहंतु । शीताहतः ॥ आरहंतु ।

दयाहतः ॥ लवहंतु । [जलकणाहतः ॥] तावहंतु । [दाहहतः ॥] इति द्वयमन्यस्मिन्नपि विशेषणीक्रियते । तावहंचू वुतराथ् । [दाहहता पृथ्वी इति ॥]

## ॥ मंदछमोदमानेभ्यो व्यंतु ॥२६॥

एभिस्त्रिभिः शब्दैः सहितत्वे अभिधेये व्यंतु प्रत्ययो भवति ॥ मंदछव्यंतु । मन्दाक्षयुतः ॥ मोदव्यंतु । आदरयुतः ॥ मानव्यंतु । मानयुतः ॥

## ॥ बर्सांशब्दादाढ्यार्थे ॥२७॥

स्पष्टम् ॥ बर्सांव्यंतु । आढ्यः ॥

## ॥ दन्दनस्तोरनिष्टार्थे आन् ॥२८॥

दंदूनस्तुशब्दाभ्यामनिष्टार्थाभ्यां सहितत्वे ऽभिधेये सति आन् प्रत्ययो भवति ॥ दंदान् । दन्तुरः ॥ नस्तान् । दुर्नासिकः ॥

## ॥ ऊ् वा ॥२९॥

आभ्यां शब्दाभ्यां विकल्पेन ऊ् प्रत्ययो भवति ॥ नंस्तु । दंदु ॥ पक्षे । नस्तूरु । दंदूरु ॥

## ॥ यड्शब्दात्तुन्दावल् ॥३०॥

स्पष्टम् ॥ यडल् । तुन्दिलः ॥

## ॥ जिघत्सावलोपश्च ॥३१॥

स्पष्टम् ॥ यड्ल् । कुक्षिंभरिः ॥

## ॥ हर्शब्दात्ताच्छील्ये ॥३२॥

अस्माच्छब्दात्ताच्छीले अर्थे अल् प्रत्ययो ऽकारलोपश्च स्यात् ॥ ह्रल्। कलहशीलः ॥

## ॥ जत्शब्दात्तद्वति ॥३३॥

स्पष्टम् ॥ जच़्ल्। रोमवान् ॥

## ॥ वैँसो जैवातृके ऽट् ॥३४॥

वैँस्शब्दादायुष्मत्त्वे ऽभिधेये अट् प्रत्ययो भवति ॥ वैँसट्। आयुष्मान् ॥

## ॥ र्‌षस्ताच्छील्ये ॥३५॥

र्‌ष्शब्दात्ताच्छील्यार्थे अट् प्रत्ययो भवति ॥ र्‌षट्। ईर्ष्यालुः ॥

## ॥ अंछिशब्दाद्दुर्दृष्टाविट् ॥३६॥

दुर्दृष्टौ पुरुषे ऽभिधेये सति अंछिशब्दात् इट् भवति॥ अछीट्। दुर्दृष्टिः ॥

## ॥ रूपूलूबाभ्यामतिशये ॥३७॥

रूप्लूब्शब्दयोर्भूरित्वत्त्वे ऽभिधेये सति इट् प्रत्ययो भवति ॥ रूपिट्। अतिसुन्दरः ॥ लूबिट्। लोलुभः ॥

## ॥ ज़्यवश्च ॥३८॥

ज़्यविट्। सूचकः ॥

## ॥ ल्यकल्शब्दादूठ् ॥३९॥

स्पष्टम् ॥ ल्यकलूठ् । अश्लीलदः ॥

## ॥ भावे ॥४०॥

इत उत्तरं ये प्रत्ययास्ते भावे विज्ञेयाः ॥ भावस्तु संज्ञाभावधातुभावभेदाद्विविधः । संज्ञाभावे अधिकारोऽयम् । धातुभावस्तु कृत्प्रक्रियायां निरूपयिष्यते ॥

## ॥ विशेष्यायत्तानामट् ॥४१॥

विशेष्यस्य भेद्यस्य अधीना ये विशेषणशब्दास्तेषां भावे अट् प्रत्ययो भवति । उदाहरणान्यग्रे सर्वत्र ॥ ऌतुशब्दस्य तु देहशुभतायामेव भावप्रत्ययः स्यादिति वेद्यम् ॥

## ॥ त्र्यक्षराधिकानामार् ॥४२॥

ते नित्यविशेष्यनिघ्नाः शब्दाश्चेत् त्र्यक्षरास्तदधिका वा स्युस्तदा आर् प्रत्ययो भवति ॥ व्वज़्ज्यार् । रक्तता ॥ म्वकज्यार् । मुक्तता ॥

## ॥ टोठोर्वा ऽनागमो ऽन्त्यस्वरलोपश्च ॥४३॥

टोठुशब्दाद्विकल्पेन आर् प्रत्ययः अन् आगमश्च भवति अन्त्यस्योकारस्य च लोपः स्यात् ॥ टाठञ्ञार् । प्रियता ॥ अत्र लिङ्गस्य अनागमव्यवहितत्वात् टवर्गान्तानां च (सू० ४९) इत्यनेन ठकारस्य छकारो न भवति किंतु तवर्गान्तानामप्रसिद्ध (सू० ५०) इत्यनेन नकारस्य ञकारः । पक्षे । टाछ्यर् । प्रियता ॥

## ॥ क्वचित्पूर्व एव ॥४४॥

त्र्यक्षराधिकानां क्वचित्स्थाने पूर्वः अर् प्रत्यय एव भवति ॥ अपज़र् । असत्यता ॥ क्रुहन्नर् । कार्ष्ण्यम् ॥ काव्रर्यर् । कपिलता ॥ कावर्यर् । नीलता ॥ कृपज़र् । कार्पण्यम् ॥ कायर्यर् । असारता ॥ खोवर्यर् । वामता ॥ ग्यश्याम्यर् । श्यामता ॥ च्रत्यर् । चतुरता ॥ विसम्यर् । विषमता । इत्यादि ॥

## ॥ हशो ऽश्लीले ॥४५॥

हश्शब्दादश्लीले ऽर्थे अर् भवति ॥ हशर् । गालिदानेन श्वश्रूत्वम् ॥ अश्लीले किम् । हशतोनु । श्वश्रूत्वम् ॥ (सू० ६३) तोनु प्रत्ययः ॥

## ॥ क्रंबुगंशुभ्यां वा लोपः ॥४६॥

आभ्याम् शब्दाभ्यां विकल्पेन भावप्रत्ययलोपः स्यात् ॥ क्रब्यर् । कुब्जता ॥ गश्यर् । जाल्मता ॥ पक्षे । क्रंबु । कुब्जता ॥ गंशु । जाल्मता ॥

## ॥ कवर्गान्तानां चवर्गादेशः क्रमात् ॥४७॥

तेषां विशेष्यनिघ्नानां द्व्यक्षराणां त्र्यक्षराणां च अन्त्यस्य उकारविशिष्टस्य कवर्गीयाक्षरस्य क्रमेण चवर्गीयाक्षरादेशो भवति ॥ निकु । निच्यर् । क्षुद्रत्वम् ॥ टंकु । टच्यर् । तैक्ष्ण्यम् ॥ ह्वंखु । ह्वछ्यर् । शुष्कता ॥ त्र्युखु । त्रिछ्यर् । दक्षता ॥ द्वंगु । द्वज्यर् । दुर्लभता ॥ स्वंगु । स्वज्यर् । सुलभता ॥ निकुशब्दाद्विशेष्यायत्तानामर् (सू० ४१) अनेन ककारस्य चकारः । उवर्णान्तानामिकारः (सू० २।१।३०) यत्वम् । त्र्युखुशब्दोपधायुकारस्य इकारः (सू० २।१।७६) । सर्वत्र यत्वम् ॥

## ॥ न च्वंकुखूँखुशब्दयोः ॥४८॥

च्वंकुशब्दखूँखुशब्दसंबन्धिनोः ककारखकारयोश्चवर्गादेशो न भवति॥ च्वंकु। च्वक्यर्। अम्लत्वम्॥ खूँखु। खूँख्यर् [। अवनाटवद्वचनम्]॥

## ॥ टवर्गान्तानां च ॥४९॥

टवर्गान्तानां विशेष्यनिघ्नानां शब्दानां च क्रमेण चवर्गादेशो भवति॥ म्वंटु। म्वच्यर्। स्थौल्यम्॥ गंटु। गच्यर्। अल्पोज्ज्वलता॥ द्रौँठु। द्रौँछ्यर्। कठोरता॥ मूँठु। मैँछ्यर्। मन्दता॥ म्वंडु। म्वंज्यर्। कुण्ठता॥ बंडु। बज्यर्। महत्ता॥ प्रोणु। प्राञर्। पुराणता॥

## ॥ तवर्गान्तानामप्रसिद्धः ॥५०॥

तवर्गान्तानां विशेष्यनिघ्नानां शब्दानामन्त्याक्षरस्य क्रमेणाप्रसिद्धश्चवर्गादेशो भवति अप्रसिद्धो दन्त्यः॥ तंतु। तच़र्। तप्तता॥ मंतु। मच़र्। मत्तता॥ वंथु। वछ़र्। विस्तृतता॥ थंदु। थज़र्। औन्नत्यम्॥ मंदु। मन्ज़र्। मान्द्यम्॥ तंनु। तञर्। तनुता॥ गुमंनु। गुमञार्। ईषन्मालिन्यम्॥ तमंनु। तमञार्। कार्ष्ण्यम्॥ तूरंनु। तूरञार्। शीतता॥ कटमलिनु। कटमलिञार्। धूसरता॥ पनुनुशब्दस्यादिस्वरस्य दीर्घ इष्यते॥ पानञार्। आत्मीयता॥

## ॥ अप्रसिद्धादिलोपः ॥५१॥

अप्रसिद्धाच्चवर्गात् इकारस्य लोपो भवति उदाहरणानि पूर्वसूत्रोक्तानि अप्रसिद्धचवर्गात्परस्य इकारस्य लोपः स्वयं बुद्धिमता निर्णयः॥ छ़्वंचु। छ़्वच़र्। रिक्तता॥ अंछु। अछ़र्। नैर्बल्यम्॥ पंज़ु। पज़र्। सत्यता॥ अंनु। अञर्। अन्धता॥

## ॥ लान्तानां जः ॥५२॥

लकारान्तानां विशेष्यनिघ्नानामन्त्यस्य जकारो भवति ॥ खॅलु । खज्यर् । विस्तृतत्वम् ॥ [वलु ।] वोज्यर् । चाञ्चल्यम् ॥ कुमुलु । कुमज्यार् । कोमलता ॥ एवं । व्वज़्ज्यार् । उज्ज्वलता ॥ म्वकज्यार् । मुक्तता ॥ ज़ांय्ज्यार् । सूक्ष्मता ॥ पिशज्यार् । पेशलता ॥ लान्तानां किम् ॥ बिय्यर् । पर्युषितत्वम् ॥ च़र्यर् । आधिक्यम् ॥ फहर्यर् । पारुष्यम् ॥ नव्यर् । नवीनता ॥

## ॥ त्रकुरुशब्दस्य च ॥५३॥

अन्त्यव्यञ्जनस्य रकारस्य जकारो भवति ॥ त्रकज्यार् । कठोरता ॥ पक्षे । त्रकर्यर् ॥

## ॥ हान्तानां शः ॥५४॥

स्पष्टम् ॥ हिहु । हिश्यर् । सादृश्यम् ॥ च़ोहु । च़ाश्यर् । कटुता ॥ हान्तानां किम् । गश्यर् । जाल्मता ॥ च़ाष्यर् । कटुत्वम् ॥ फंरिश्यर् । पारुष्यम् ॥

## ॥ सान्तानां वा छः ॥५५॥

स्पष्टम् ॥ कूँसु । कैँछर् । कनिष्ठता ॥ पक्षे ॥ कैँसर् । कनिष्ठता ॥ पवर्गान्तान्युदाहरणानि यथा ॥ पंपु । पप्यर् । पक्वता ॥ फंफु । फफ्यर् । लोहलत्वम् ॥ ग्वबु । ग्वब्यर् । गुरुत्वम् ॥ ओमु । आम्यर् । आमता । इति ॥

## ॥ बंडुशब्दादीमी वा ॥५६॥

बंडुशब्दात्परो विकल्पेन ईमी प्रत्ययो भवति । आदेशाभावश्च ॥ बंडु । बडीमी । महत्ता ॥ पक्षे । बज्यर् । इति ॥

## ॥ शूचुछ्यंटुशब्दाभ्यां यांरू च ॥५७॥

आभ्यां शब्दाभ्यां पक्षे भावे यांरू च भवति ॥ शूचु। शूच्यियांरू। शुद्धता ॥ छ्यंटु। छ्यंटियांरू। उच्छिष्टता ॥ पक्षे। शोचर्। छ्यच्यर् ॥ इति भवतः ॥

## ॥ योरुशब्दान्ताज्ज् ॥५८॥

योरुशब्दाद्भावविषये ज़् प्रत्ययो भवति ॥ मंज़िमूयार्ज़्। दृतता ॥ पंज़ियार्ज़्। सत्यता ॥ अपंज़ियार्ज़्। असत्यता ॥ यार्ज़्। मित्रता ॥ शूच्यियार्ज़्। शुद्धता ॥ छ्यटियार्ज़्। अशुद्धता ॥

## ॥ विशेष्यानायत्तानामिल्आंज़्प्रत्ययौ ॥५९॥

भावे इत्यनुवर्तते स्वयं विशेष्यशब्दानां भावे अभिधेये इल् प्रत्ययः आंज़् प्रत्ययश्च भवति ॥ पंण्डितांज़्। पण्डितता ॥ पक्षे। पंण्डितिल् ॥ छांनिल्। वा। छानांज़्। तक्षकता ॥ गूरिल्। वा। गोरांज़्। पुरोहितता। इत्यादि ॥

## ॥ क्वचिदेकतरः ॥६०॥

क्वचिच्छब्दे एकतर एव प्रयुज्यते ॥ द्रंमिलांज़्। लेपकता ॥ द्रंसिलिल्। इति न साधुशब्दः ॥

## ॥ क्वचिद्युगपच्च ॥६१॥

क्वचित्स्थाने प्रोक्तौ प्रत्ययौ युगपत्प्रयुज्येते ॥ मतिल्। वा। मंतिलांज़्।

---

[६१। युगपच्छब्दो ऽत्रोभयार्थको ज्ञेयः न तु समवायार्थकः समवेतयोः प्रत्यययोरेकस्माच्छब्दात्प्रयोगासंभवात् ॥]

उन्मत्तता ॥ अत्र मतुशब्दस्य विशेष्यनिघ्नत्वात्पूर्वं मत्सर्स्वरूपे सिद्धे ऽपि प्रोक्तकर्मार्थमेव पुनरुदाहृतम् ॥ गूरिलाज़् । छानिलाज़् । ब्रीठिलाज़् । इत्यादि ॥

## ॥ लाँछ्शब्दस्योपधाया ऊत्वं वा ॥६२॥

लूँछिल् । पक्षे । लाँछिल् । नपुंसकता ॥

## ॥ संबन्धिनां तोनु ॥६३॥

नाडिसंबन्धिनां भावे अभिधेये सति तोनु प्रत्ययो भवति ॥ मालितोनु । पितृत्वम् ॥ माजितोनु । मातृत्वम् ॥ बायितोनु । भ्रातृत्वम् ॥ पुत्रतोनु । पुत्रत्वम् ॥ हशतोनु । श्वश्रूत्वम् । इत्यादि ॥ कृत्रिमसंबन्धिनां भावे तु तकारस्य पकार इष्यते ॥ व्यसपोनु । वयस्यात्वम् ॥ दायपोनु । धात्रीत्वम् ॥ पाज़िपोनु । नीचत्वम् । इत्यादि ॥

## ॥ शत्रुमित्रपितुर्ऋषिबन्धुभ्य उत् ॥६४॥

एषां शब्दानां भावे गम्यमाने सति उत् प्रत्ययो भवति ॥ शत्रुत् । शत्रुत्वम् ॥ म्यत्रुत् । मित्रत्वम् ॥ पितुरुत् । सजातीयत्वम् ॥ ऋष्युत् । ऋषित्वम् ॥ बन्दुत् । बन्धुत्वम् ॥

## ॥ मैत उन् ॥६५॥

शवत्वाचकात् मैतशब्दाद्भावे उन् प्रत्ययो भवति ॥ मैत् । मैतुन् । शवता ॥

## ॥ म्वंड्शब्दादुस् ॥६६॥

विधवावाचकात् म्वंड्शब्दाद्भावे उस् प्रत्ययो भवति ॥ म्वंडुस् । वैधव्यम् ॥

## ॥ द्रबुशब्दात्मृगार्थे ॥६७॥

स्पष्टम् ॥ द्रबुस् । मृगः ॥ अन्यत्र । द्रविल् । रजकता ॥

## ॥ स्वन्शब्दाद्वंदु ॥६८॥

स्पष्टम् ॥ स्वनवंदु । सादत्न्यम् ॥

## ॥ बोजुशब्दाद्वद् च ॥६९॥

अस्माच्छब्दात् वद् प्रत्ययो भवति पक्षे वंदु प्रत्ययश्च स्यात् ॥ बोजिवंदु । साधारणता ॥ पक्षे । बोजिवद् । साधारणता ॥

## ॥ हतादिभ्यः संख्यायाम् ॥७०॥

हत्आदीनां संख्यावाचकानां वंदु प्रत्ययो भवति ॥ हतवंदु । शतशः ॥ सासवंदु । सहस्रशः ॥ लछ्यवंदु । लक्षशः । इत्यादि ॥

## ॥ शाकादिभ्यो मुष्ट्यर्थे ॥७१॥

शाकानां मुष्टावभिधेयायां सत्यां वंदु प्रत्ययो भवति ॥ हाकवंदु । शाकमुष्टिः ॥ मुजिवंदु । मूलिकामुष्टिः ॥ ग्त्रग्जिवंदु [। सर्षपशाकमुष्टिः] ॥

## ॥ उलु ॥७२॥

अधिकारोऽयम् ॥ इत उत्तरं वक्ष्यमाणार्थेषु उलु प्रत्ययो भवति ॥

## ॥ गाटशब्दान्निपुणे ॥७३॥

स्पष्टम् ॥ गाटुलु । निपुणः ॥

## ॥ क्कंडो ऽल्पार्थे ॥७४॥

क्कंड् इति । वृहत्कुण्डं । तस्याल्पार्थे उलु प्रत्ययो भवति । क्कंडुलु । कुंडलाकृतिः ॥

## ॥ गंडो वस्तुसाकल्ये ॥७५॥

वस्तुनः साकल्ये अभिधेये ग्रन्थिवाचकाद्गंड्शब्दात् उलु प्रत्ययो भवति ॥ गंडुलु । वस्तुसामस्त्यम् ॥

## ॥ ग्तूशब्दादतिशये ॥७६॥

नदीप्रवाहवाचकात् ग्तूशब्दादतिशये ऽर्थे उलु भवति ॥ ग्तुलु । बहुलम् ॥

## ॥ गदश्च ॥७७॥

स्पष्टम् ॥ गदुलु । बहुलम् ॥

## ॥ टंठुशब्दान्मानावपने ॥७८॥

द्रोणद्वयवाचकात् टंठुशब्दात्परिमाणभाण्डार्थे उलु प्रत्ययो भवति ॥ टंठुलु । काष्ठावपनम् ॥

## ॥ द्रंगुप्वंतुशब्दाभ्यां सादृश्ये ॥७९॥

द्रंगु । मुष्टिः ॥ प्वंतु । अर्भकः ॥ आभ्यां सादृश्यार्थे उलु प्रत्ययो भवति ॥ द्रगुलु । पिण्डम् ॥ प्वतुलु । शिलामयी मूर्तिः ॥

## ॥ म्वलसादोस्तद्वति ॥८०॥

स्पष्टम् ॥ म्वलुलु । बहुमूल्यम् ॥ सादुलु । स्वादवान् ॥

## ॥ क्कछ्शब्दाद्भारिके ॥८१॥

स्पष्टम् ॥ क्कछ्लु । भारवाहः ॥

## ॥ छ्वक्शब्दात्स्पष्टतायाम् ॥८२॥

छ्वक् । शोधना । तस्मात्स्पष्टार्थे उलु प्रत्ययो भवति ॥ छ्वकुलु । गद्गदम् ॥

## ॥ चट्शब्दाच्चौरे ॥८३॥

चट् । छदनमे । तस्माच्चौरार्थे उलु भवति ॥ चटुलु । चौरः ॥

## ॥ पत्शब्दादुडुपे ॥८४॥

स्पष्टम् ॥ पतुलु । उडुपः ॥

## ॥ छ्वच्छब्दात्स्वव्यभिचारे ॥८५॥

गुदवाचिनः छ्वत्शब्दात्स्वव्यभिचारकारयितरि उलु स्यात् ॥ छ्वतुलु । स्वव्यभिचारकारयिता । गांडू ॥

## ॥ रातूदुहोस्तत्काले ॥८६॥

रात्दुह्शब्दाभ्यां तत्तत्काले ऽभिधेये उलु प्रत्ययः स्यात् ॥ रातुलु । निशाकालः ॥ दुहुलु । दिनकालः ॥

## ॥ मूनूशब्दाद्वस्त्रे ॥८७॥

उपधाह्रस्वश्च निपात्यते ॥ मुनुलु । और्णं वासः ॥

॥ युलु ॥८८॥

इत उत्तरं वक्ष्यमाणार्थेषु युलु भवति ॥ अधिकारोऽयम् ॥

॥ टंपुजटोर्जटाधारिणि ॥८९॥

टंपुशब्दात् जट्शब्दाच्च तद्धारिणोऽर्थे युलु स्यात् ॥ टम्युलु । जटाधारी ॥ जट्युलु । जटाधारी ॥

॥ दाहः करुणायामुपधाह्रस्वश्च ॥९०॥

स्पष्टम् ॥ दह्युलु छुह् वदान् । सकरुणं रोदिति ॥

॥ रसात्तद्वति ॥९१॥

स्पष्टम् ॥ रस्युलु छुह् ग्यवान् । सरसं गायति ॥

॥ मछ्स्निहोः स्नेहवति ॥९२॥

मछ् इति । सान्त्वनं । स्निह् इति स्नेहस्तयोः शब्दयोः युलु प्रत्ययो भवति ॥ मछ्युलु । सस्नेहः ॥ स्निह्युलु । सस्नेहः ॥

॥ मिषान्नखमांसलेशे ॥९३॥

स्पष्टम् ॥ मिष्युलु । नखमांसलेशः ॥

॥ स्यकः स्वादादिसादृश्ये ॥९४॥

स्यक् । सिकता । तत्सादृश्येन स्वादादावभिधेये युलु प्रत्ययः स्यात् ॥ स्यक्युलु चूँटु । सिकतास्वादसदृशः पालीवतः ॥ स्यकिजू बुतराथ् । सैकतिला भूमिः ॥

## ॥ मांजूशब्दादपत्रपिष्णौ ॥९५॥

मातृवाचकात् मांजूशब्दात् लज्जावदर्थे युलु प्रत्ययः स्यात्॥ माञ्युलु। लज्जावान्॥

## ॥ मलायुनु तद्वति ॥९६॥

मलशब्दात्तद्वदर्थे युनु प्रत्ययो भवति॥ मल्युनु। मलिनः॥

## ॥ कूटुशब्दादल्पार्थे उनु ॥९७॥

कूटु। बृहत्काष्ठं। तस्याल्पार्थे उनु प्रत्ययो भवति॥ कूटुनु। क्षुद्रकाष्ठम्॥

## ॥ दगादायुधे ॥९८॥

दग्। घातः। तस्मादायुधार्थे उनु प्रत्ययो भवति॥ दगुनु। मृगः॥

## ॥ रंगस्वन्मन्चम्दाँद्काँद्भ्यः शिल्पिनि र्॥९९॥

एभ्यः शब्देभ्यः शिल्पिनि अर्थे र् प्रत्ययो भवति॥ रंग्र्। रजकः॥ स्वन्र्। स्वर्णकारः॥ मन्र्। शाङ्खिकः॥ चम्र्। चर्मकारः॥ दाँद्र्। शाकविक्रयी॥ काँद्र्। कान्दविकः॥

## ॥ डास्फासोर्विनाशकभेदकयोः ॥१००॥

स्पष्टम्॥ डास्र्। विनाशकः॥ फास्र्। भेदकः॥

## ॥ बंगात्तत्पायिनि ॥१०१॥

बंगशब्दात्तत्पायिनि अर्थे र् प्रत्ययो भवति॥ बंग्र्। भङ्गापः॥

॥ बमो ऽन्तरायिणि ॥१०२॥

बम्शब्दाद्विघ्नकारके ऽर्थे र् प्रत्ययः स्यात् ॥ बम्र् । विघ्नकृत् ॥

॥ लमो विलम्बके ॥१०३॥

लमशब्दाद्विलम्बकर्त्रर्थे र् प्रत्ययो भवति ॥ लम्र् । विलम्बकः ॥

॥ लाबो वार्धुषिके ॥१०४॥

लाब्शब्दात् उक्तार्थे र् प्रत्ययः स्यात् ॥ लाब्र् । वृद्धाजीवः ॥

॥ सालो जन्ये ॥१०५॥

साल्शब्दान्निमन्त्रितजन्यार्थे र् प्रत्ययो भवति ॥ साल्र् । जन्याः ॥

॥ लूटो लुण्ठके ॥१०६॥

लूट्शब्दात् लुण्ठकार्थे र् प्रत्ययः स्यात् ॥ लूट्र् । लुण्ठकः ॥

॥ भ्रमो भ्रमप्रदे ॥१०७॥

स्पष्टम् ॥ भ्रम्र् । भ्रमदः ॥

॥ लूबो ऽन्त्यस्य दश्च ॥१०८॥

लूब्शब्दात्तद्वत्त्वार्थे र् प्रत्ययो भवति अन्त्यस्य बकारस्य च दकारो भवति ॥ लूद्र् । लोलुभः ॥

॥ तौल्यपरिमिते युन् ॥१०९॥

तुलया परिमिते वस्तुनि युन् प्रत्ययो भवति । तच्च द्विधा । एकं स्वयं वस्तु

कियदस्तीति द्वितीयं कियन्मितस्य वस्तुन आधारभूतमस्तीत्यनयोर्द्वयोरेव योगारम्भः ॥ त्रांक्यु़नु कद्। द्रौणिको मेषः ॥ सीर्युनु थाल्। प्रास्थिकः स्थालः ॥ खार्युनु बोरु्। खारिको भारः ॥ त्रांक्युनु नंद्रु। द्रौणिकः कुम्भः ॥ सीर्युनु बान। प्रास्थिकं भाण्डम् ॥ अत्र त्रख्शब्दस्योपधाया दीर्घः सेर्शब्दस्य एकारस्य ईकारो दृश्यते। प्रस्थवाची सीर्युनु शब्दः पलवाची पल्शब्दापरपर्यायः पल्युनुशब्दश्चेतरावत्रथार्यौ ॥ अन्यत्र। च्वत्रोक्रु। चतुर्द्रौणिकः ॥ च्वत्रांक्युनु। चतुर्द्रौणिकः ॥

## ॥ पाँज़ुवुशब्दस्य वस्य शश्च ॥११०॥

द्रोणार्धवाची पाँज़ुवुशब्दस्तत्तौल्येनाभिहिते वस्तुनि युनु प्रत्ययो भवति वकारस्य च शकारो भवति ॥ पाँज़शुनु। अर्धद्रौणिकः ॥

## ॥ षष्ट्यादेर्मौल्यसंख्यायां च ॥१११॥

मौल्यसंख्यया वस्तुनि अभिधेये सति षष्टेः परतः युनु प्रत्ययो भवति ॥ शीठ्युनु। षाष्टिकः ॥ सतत्युनु। साप्ततिकः ॥ षष्ट्यादेः किम् ॥ दहन् हंन्दु दाँदू। दशानां वृषः ॥

## ॥ सर्वनामशब्देभ्यश्च ॥११२॥

तीत्युनु। तावतिकः ॥ यीत्युनु। यावतिकः ॥ कूत्युनु। कियतिकः ॥ ईत्युनु। एतावतिकः ॥

## ॥ वर्षार्थे च ॥११३॥

वांर्ष्युनु। वार्षिकः ॥

॥ बमो ऽन्तरायेणि ॥१०२॥

बम्शब्दाद्विघ्नकारके ऽर्थे ऱ् प्रत्ययः स्यात् ॥ बमॢ्ऱ् । विघ्नकृत् ॥

॥ लमो विलम्बके ॥१०३॥

लमशब्दाद्विलम्बकर्त्रर्थे ऱ् प्रत्ययो भवति ॥ लमॢ्ऱ् । विलम्बकः ॥

॥ लाबो वार्धुषिके ॥१०४॥

लाब्शब्दात् उक्तार्थे ऱ् प्रत्ययः स्यात् ॥ लाबॢ्ऱ् । वृद्धाजीवः ॥

॥ सालो जन्ये ॥१०५॥

साल्शब्दान्निमन्त्रितजन्यार्थे ऱ् प्रत्ययो भवति ॥ सालॢ्ऱ् । जन्याः ॥

॥ लूटो लुण्ठके ॥१०६॥

लूट्शब्दात् लुण्ठकार्थे ऱ् प्रत्ययः स्यात् ॥ लूटॢ्ऱ् । लुण्ठकः ॥

॥ ब्रमो भ्रमप्रदे ॥१०७॥

स्पष्टम् ॥ ब्रमॢ्ऱ् । भ्रमदः ॥

॥ लूबो ऽन्त्यस्य दश्च ॥१०८॥

लूब्शब्दात्तद्वत्त्वार्थे ऱ् प्रत्ययो भवति अन्त्यस्य बकारस्य च दकारो भवति ॥ लूदॢ्ऱ् । लोलुभः ॥

॥ तौल्यपरिमिते युनु ॥१०९॥

तुलया परिमिते वस्तुनि युनु प्रत्ययो भवति । तच्च द्विधा । एकं स्वयं वस्तु

कियदस्तीति द्वितीयं कियन्मितस्य वस्तुन आधारभूतमस्तीत्यनयोर्द्वयोरेव योगारम्भः॥ त्रांक्युनु कठ्। द्रौणिको मेषः॥ सीर्युनु थाल्। प्रास्थिकः स्थालः॥ खार्युनु बोरु। खारिको भारः॥ त्रांक्युनु नंटु। द्रौणिकः कुम्भः॥ सीर्युनु बान। प्रास्थिकं भाण्डम्॥ अत्र त्रख्शब्दस्योपधाया दीर्घः सेर्शब्दस्य एकारस्य ईकारो दृश्यते। प्रस्थवाची सीर्युनु शब्दः पलवाची पल्शब्दापरपर्यायः पल्युनुशब्दश्चेतरावत्रधार्यौ॥ अन्यत्र। च्वलोकु। चतुर्द्रौणिकः॥ च्वत्रांक्युनु। चतुर्द्रौणिकः॥

## ॥ पाँजुवुशब्दस्य वस्य शश्च ॥११०॥

द्रोणार्धवाची पाँजुवुशब्दस्तत्तौल्येनाभिहिते वस्तुनि युनु प्रत्ययो भवति वकारस्य च शकारो भवति॥ पाँजशुनु। अर्धद्रौणिकः॥

## ॥ षष्ट्यादेर्मौल्यसंख्यायां च ॥१११॥

मौल्यसंख्यया वस्तुनि अभिधेये सति षष्टेः परतः युनु प्रत्ययो भवति॥ शीठ्युनु। षाष्टिकः॥ सतत्युनु। साप्ततिकः॥ षष्ट्यादेः किम्॥ दहन् हंन्दु दाँद्। दशानां वृषः॥

## ॥ सर्वनामशब्देभ्यश्च ॥११२॥

तीत्युनु। तावतिकः॥ यीत्युनु। यावतिकः॥ कूंत्युनु। कियतिकः॥ ईत्युनु। एतावतिकः॥

## ॥ वर्षार्थे च ॥११३॥

वार्ष्युनु। वार्षिकः॥

## ॥ संख्यायाश्च पूरणे युम् ॥११४॥

संख्यायाः पूरणे ऽर्थे युम् प्रत्ययो भवति चशब्दात्सर्वनामशब्देभ्यश्च ॥ अक्युम् । प्रथमः ॥ दह्युम् । दशमः ॥ वुह्युम् । विंशः ॥ हत्युम् । शततमः ॥ सास्युम् । सहस्रतमः ॥ पुंस्त्रियोः कतिशब्दवाचकाभ्याम् कॊचूकचशब्दाभ्यामपि विज्ञेयः ॥ कॊच्युम् । कतमः ॥ यीत्युम् । यतमः ॥ तीत्युम् । ततमः ॥ ईत्युम् । इतमः ॥ स्त्रीलिङ्गे तु युकारस्य इकारो भवति ॥ कॊचिमू । कतमा ॥ यीतिमू । यतमा ॥ इत्यादि ॥

## ॥ अष्टसंख्यावधि शतार्थे हत् ॥११५॥

स्पष्टम् ॥ अख्हथ् । एकशतम् ॥ ज़ुहथ् । शतद्वयम् ॥ त्रिहथ् । त्रिशतं ॥ इत्यादि ॥

## ॥ तत्परतो हस्य शः ॥११६॥

नवसंख्यामारभ्य शतार्थे हकारस्य शकारो भवति ॥ नव्शथ् । नव शतानि ॥ काह्शथ् । एकादश शतानि ॥ वाह्शथ् । द्वादश शतानि ॥ इत्यादि ॥

## ॥ देशभवे इ् प्रत्ययश्च ॥११७॥

स्पष्टम् ॥ स्रोत्पुरि नाव् । सुय्यपुरजा नौः ॥ ईरानि गुरु । ईरानदेशजो ऽश्वः ॥ चीनि खोस् [ । चीनदेशभवः कंसः ] ॥ हिन्दुस्तानि कपुर् । इत्यादि ॥

## ॥ कशीदेशभवे उरु अन्त्यस्वरादिलोपोपधादीर्घौ च ॥११८॥

काश्मीरभाषायां कश्मीरः कशीर् इति स्त्रीलिङ्गवाची शब्दः कथ्यते । तस्या उद्भूते वस्तुनि अभिधेये सति उरु प्रत्ययो भवति अन्त्यस्वराद्यवयवस्य लोप

उपधायाश्च दीर्घो भवति ॥ कांशुरु कंग् । काश्मीरं कुङ्कुमम् ॥ कांशुरु पश्मीन । काश्मीरं बहुमूल्यम् [ राङ्कवम् ] ॥ कांशिरू कद् । काश्मीरं कुष्ठम् । इत्यादि ॥

## ॥ देशकालभवे चोकु अस्त्रियाम् ॥११९॥

देशभवे कालभवे च वस्तुनि अभिधेये उकु प्रत्ययो भवति स्त्रीलिङ्गं वर्जयित्वा ॥ कत्युकु । कुत्रत्यः ॥ तत्युकु । तत्रत्यः ॥ इत्युकु । इहत्यः ॥ यत्युकु । यत्रत्यः ॥ हुत्युकु । अत्रत्यः ॥ गरुकु । गृह्यः ॥ करुकु । किंकालिकः ॥ रातुकु । ह्योभवः ॥ परसुकु । परारि भवः । इत्यादि ॥ अज़्शब्दादिकारागमश्चेष्यते ॥ अज़्युकु । अद्यतनः ॥

## ॥ मिलोपयुक्तात्पारिप्रत्ययान्तात्सर्वनाम्नो युमु ॥१२०॥

उक्तप्रत्ययो भवतीति स्पष्टम् ॥ पार्युमु । पारदेशजः ॥ कपार्युमु । किंपार्श्वः ॥ तपार्युमु । तत्पार्श्वः ॥ यपार्युमु । यत्पार्श्वः ॥ हुपार्युमु । अपारजः ॥ इपार्युमु । एतत्पार्श्वः ॥ अपार्युमु । पारजः ॥ अस्त्रियां किम् ॥ कतिचू । कुत्रत्या ॥ एवं । पारिमू । पारजा ॥ इत्यादि ॥ दिग्भवे च दछिनुखोवुरुशब्दौ वर्जयित्वा युमु भवति ॥ ब्रूँठ्युमु । अग्रिमः ॥ पत्युमु । पश्चिमः ॥ हीर्युमु । वा । प्यठ्युमु । ऊर्ध्वः ॥ तल्युमु । वा । ब्वन्युमु । अधरः ॥ अन्दर्युमु । आन्तरः ॥ न्यबर्युम् । बाह्यः ॥ अद्यौ प्रोक्तौ किम् ॥ दछिन्युकु । दक्षिणः ॥ खोवुर्युकु । वामः ॥

## ॥ समूहे र्युल्‌ठु ॥१२१॥

स्पष्टम् । गोवुर्युल्‌ठु । गोसमूहः ॥ गुरिर्युल्‌ठु । अश्वसमूहः ॥ गुपनुर्युल्‌ठु । गोपशुसमूहः ॥ तीरिर्युल्‌ठु । मेषादिसमूहः ॥ ज़नानर्युल्‌ठु । स्त्रैणम् ॥ महनिविर्युल्‌ठु । मानुष्यकम् ॥ इत्यादि ॥

## ॥ लूकूशब्दादय् ॥१२२॥

लूकूशब्दात्समूहे अय् भवति ॥ लूकय् । जनता ॥

## ॥ पानशब्दादुनु उपधाह्रस्वश्च ॥१२३॥

स्पष्टम् ॥ पनुनु । आत्मीयः ॥

## ॥ परशब्दादुदु ॥१२४॥

स्पष्टम् ॥ परुदु । परकीयः ॥

## ॥ तिह्यादिभ्यः प्रकारोक्तौ थः ॥१२५॥

तिह्यिह्आदिभ्यः पञ्चभ्यः प्रकारवचने गम्यमाने थ प्रत्ययो भवति ॥ तिथ । तथा ॥ यिथ । यथा ॥ क्यथ । कथम् ॥ इथ । इत्थम् ॥ हुथ । इत्थम् ॥

## ॥ उपमाने थु ॥१२६॥

तिह्आदिशब्दैरुपमाने वाच्ये सति थु प्रत्ययो भवति ॥ तिथु । तादृशः ॥ यिथु । यादृशः ॥ किथु । कीदृशः ॥ इथु । एतादृशः ॥ हुथु । ईदृशः ॥ लिङ्गप्रकरणोक्तनिश्चयप्रत्ययान्ताश्च [ सू० २।३।२१ ] यथा ॥ तिथय् । तथैव ॥ यिथय् । यथैव ॥ क्यथय् । कथमेव ॥ इथय् । इत्थमेव ॥ हुथय् । इत्थमेव ॥ एवं बुद्धिमता निश्चयार्थयप्रत्ययस्य सर्वत्र प्राप्तिरवधार्या ॥

## ॥ तस्मात्परौ पांठि पांठिनू वा ॥१२७॥

तस्मात्प्रकारप्रत्ययान्तात् परः पांठि प्रत्ययः पांठिनू प्रत्ययो वा प्रयोज्यः ॥

तिथपा॑ठि । तथा ॥ यिथपा॑ठि । यथा ॥ क्यथपा॑ठि । कथम् ॥ इथपा॑ठि । इत्थम् ॥ हुथपा॑ठि । इत्थम् ॥ एवं । तिथपा॑ठिन् । यिथपा॑ठिन् । इत्यादि ॥

## ॥ अन्यतो ऽपि च ॥१२८॥

तौ पा॑ठिपा॑ठिन्प्रत्ययौ अन्येभ्यो ऽपि दृश्येते ॥ बियपा॑ठिन् । इतरथा ॥ सारियुपा॑ठि । सर्वथा ॥ हं॑लिपा॑ठि । वक्रप्रकारम् ॥ इत्यादि ज्ञेयम् ॥ एवं संबन्धषष्ठ्यन्तेभ्यः सर्वेभ्यः शब्देभ्यो बोध्यम् ॥

## ॥ क्याहो ह्रस्वः ॥१२९॥

क्याह्शब्दस्य ह्रस्वो भवति ॥ क्यथपा॑ठि । कथम् ॥ क्यथताऌपा॑ठि । केनापि प्रकारेण ॥

## ॥ प्राणिकृतादेशेभ्यो रंग च ॥१३०॥

प्राणिनो द्वितीयादीनामेकवचनेषु [सू० २।३।५] ये तमादय आदेशाः कृतास्तेभ्यः प्रकारवचने गम्यमाने रंग प्रत्ययो भवति चशब्दादन्येभ्यो ऽपि ॥ तमिरंग । तथा ॥ यमिरंग । यथा ॥ कमिरंग । कथम् ॥ इमिरंग । इत्थम् ॥ हुमिरंग । इत्थम् ॥ अमिरंग । इत्थम् ॥ अकिरंग । एकधा ॥ द्वयिरंग । द्विधा ॥ त्र्ययरंग । त्रिधा ॥ सारिरंग । सर्वथा ॥ यत्रिरंग । वा । सिठाहिरंग । बहुधा ॥ इत्यादि ज्ञेयम् । साधनं पूर्ववत् ॥

## ॥ प्रत्ययेषु हलोपः सर्वत्र ॥१३१॥

सर्वत्र लिङ्गप्रकरणे धातुप्रकरणे च प्रत्ययेषु परेषु हकारस्य लोपो भवति ॥ क्यथपा॑ठिन् । कथम् ॥ क्याह्शब्दात् थ प्रत्ययान्तात् पा॑ठिन् प्रत्ययश्च अनेन हकारस्य लोपः । क्याहो ह्रस्व ( सू० १२९ ) इत्यनेनाकारस्याकारः ॥

## ॥ अप्राणिभ्यः स्थाने इ प्रत्ययश्च ॥१३२॥

तेभ्यः अप्राणिकृतादेशेभ्यः सामान्यस्थाने गम्यमाने इ प्रत्ययो भवति ॥ तत्र पञ्चम्यां प्रसिद्धता सप्तम्यां तु पूर्वस्वरस्याप्रसिद्धता ॥ तति । त॑ति । ततः । तत्र ॥ यति । य॑ति । यतः । यत्र ॥ कति । कुतः । कुत्र ॥ इति । इ॑ति । अतः । अत्र ॥ हुति । हु॑ति । अमुतः । अमुत्र ॥ अति । अ॑ति । अतः । अत्र ॥

## ॥ तस्मादनऽनसौ वा ॥१३३॥

तस्मात् इ प्रत्ययान्ताच्छब्दात् अन् प्रत्ययः अनस् प्रत्ययो वा भवति ॥ कत्यन् वा कत्यनस् । कुत्र ॥ तत्यन् वा तत्यनस् । तत्र ॥ यत्यन् वा यत्यनस् । यत्र ॥ अत्यन् वा अत्यनस् । अत्र ॥ एवमन्यत् ॥ अनसः सकारस्य नकारो ऽपि दृश्यते ॥ यत्यनन् । यत्र ॥ अत्यनन् । अत्र ॥ एवमन्यत् ॥

## ॥ पञ्चम्यां प्यठान्तो ऽपि ॥१३४॥

स एव इ प्रत्ययान्तः शब्दः प्यठान्तो विशेषतः पञ्चमीप्रयोगो भवति ॥ ततिप्यठ । ततः ॥ यतिप्यठ । यतः ॥ कतिप्यठ । कुतः ॥ इतिप्यठ । इतः ॥ हुतिप्यठ । अमुतः ॥ गरप्यठ । गृहतः ॥ गामप्यठ । ग्रामतः ॥ इत्यादि ॥

## ॥ सप्तम्यामनन्तादी च ॥१३५॥

अन्प्रत्ययान्ताच्छब्दात्सप्तम्यां विशेषत ई प्रत्ययो ऽपि भवति ॥ तत्यनी । तत्र ॥ यत्यनी । यत्र ॥ कत्यती । कुत्र ॥ इत्यनी । अत्र ॥ हुत्यनी । अमुत्र ॥

## ॥ ओर्तुप्रत्ययौ वान्त्यलोपश्च ॥१३६॥

तेभ्यः अप्राणिकृतादेशेभ्यः शब्देभ्यः सप्तम्याम् ओर् प्रत्ययः तु प्रत्ययो

वा भवति। अन्त्याक्षरस्य च लोपो भवति। तु प्रत्ययस्योकारान्तत्वात्पूर्वस्वरस्याप्रसिद्धता ज्ञेया॥ तोर्। तत्र॥ योर्। यत्र॥ कोर्। कुत्र॥ योर्॥ अत्र॥ हार् वा ओर्। अमुत्र॥ एवम्॥ तंतु। यंतु। कंतु। इतु। हुतु। अंतु। विज्ञेयाः॥ तु प्रत्ययान्तात् त् प्रत्ययश्चेष्यते॥ ततुत्। यतुत्। कतुत्। इतुत्। हुतुत्। अतुत्। इत्यादि॥ यप्रत्यये ओकारस्य ऊकार इष्यते॥ तूर्य्। तत्रैव॥ यूर्य्। यत्रैव॥ कूर्य्। कुत्रैव॥ यूर्य्। अत्रैव॥ ऊर्य्। अमुत्रैव॥ एवं॥ ततुय्। यतुय्। कतुय्। इतुय्। हुतुय्। अतुय्। बोध्याः॥

## ॥ पञ्चम्यामपर ओर् ॥१३७॥

अकारः परो यस्मात्तथाविधः ओर् प्रत्ययः पञ्चम्यां भवति॥ तोर। ततः॥ योर। यतः॥ कोर। कुतः॥ हार वा ओर। अमुतः। इति॥

## ॥ तिहादिभ्यः काले ऽलिः ॥१३८॥

तिहादिभ्यः कालविषये अलिप्रत्ययो भवति॥ त्यलि। तदा॥ य्यलि। यदा॥ क्यलि। कदा॥ प्रत्ययस्य इदन्तत्वात्पक्षे पूर्वस्वरस्याप्रसिद्धता बोध्या॥ त्यॅलि। य्यॅलि। क्यॅलि। इति॥

## ॥ इह्हुहोर्वुज़्व्वज़ादेशौ ॥१३९॥

अनयोः शब्दयोः सविभक्तिकयोः वुज़् व्वज़् आदेशौ क्रमेण भवतः॥ वुज़्। एतर्हि॥ व्वज़्। अधुना॥

## ॥ क्याहः कर् ॥१४०॥

क्याह्शब्दस्य कालविषये कर् आदेशो भवति॥ कर्। कदा॥

## ॥ उलुन्ताभ्यां रातुद्रुह्भ्यामिः ॥१४१॥

स्पष्टम् ॥ रात्लि । नक्तम् ॥ द्रुह्लि । दिवा ॥

## ॥ रातः कितु च ॥१४२॥

स्पष्टम् ॥ रात्कितु । नक्तम् ॥

## ॥ अन्यतो ऽपि च ॥१४३॥

न्यहफ्वलि । प्रभातम् ॥ सुलि । अचिरेण ॥ यंचूका॑लि । चिरेण ॥ का॑लि । कालेन ॥ का॑लिक्यथ् । परतरेद्युः ॥ ततिका॑लिक्यथ् । परतरतरेद्युः ॥ कमिविज़ि । कदा ॥ तमिविज़ि । तस्मिन्काले ॥ यमिविज़ि । यस्मिन्काले ॥ इत्यादयो विज्ञेयाः ॥

## ॥ कोजुम्मियुजुशब्दाभ्यां स् ॥१४४॥

आभ्यां शब्दाभ्यां काले गम्यमाने स् प्रत्ययो भवति ॥ का॑जिस् । प्राह्णम् ॥ मिमिज़िस् । अपराह्णम् ॥

## ॥ शेषेभ्यो ऽप्यन् ॥१४५॥

शेषेभ्यो रात्रिदिनविभागेभ्यः अन्येभ्यो ऽपि अन् प्रत्ययो भवति ॥ मन्दिञन् । मध्याह्नम् ॥ दुपहरन् । मध्याह्नम् ॥ कालचनन् । सायम् ॥ बतन्यंगन् वा बतदवन् । नक्तम् ॥ अड्रातन् । अर्धरात्रे ॥ पतिमूपहरन् । रात्रिपश्चाद्यामे ॥ एवमितरभाषाशब्देभ्यो ऽपि व्यवह्रियते ॥ सुब्हन् । प्रभातम् ॥ शामन् । सायम् । इति ॥

## ॥ अः प्रत्यर्थे लिङ्गात्पूर्वः प्रथ् च ॥१४६॥

प्रतिशब्दस्यार्थे गम्यमाने अप्रत्ययो भवति लिङ्गात्पूर्वः प्रथ्शब्दश्च प्रयोज्यः ॥ प्रथ्द्वह । प्रतिदिनम् ॥ प्रथ्पहर । प्रतिप्रहरम् ॥ प्रथ्वरिह्य । प्रतिवर्षम् । इत्यादि ॥

द्वितीयान्तेभ्यः शब्देभ्यो ऽपि दृश्यते ॥ प्रथ्अकिस् । प्रत्येकम् ॥ प्रथ्विज़ि । प्रतिकालम् ॥ प्रथ्महनिविस् । प्रतिपुरुषम् ॥ प्रथ्ज़नानि । प्रतिस्त्रियम् । इत्यादि बोध्यम् ॥

## ॥ द्वहः प्रथ्लोपो वा ॥१४७॥

द्वह्शब्दात्पूर्वस्य प्रथ्शब्दस्य लोपो भवति ॥ द्वह । प्रतिदिनम् ॥

## ॥ यप्रत्यये नित्यम् ॥१४८॥

तस्मादेव द्वह्शब्दात् यप्रत्यये परे नित्यं प्रथ्शब्दस्य लोपो भवति ॥ द्वहय् । प्रतिदिनमेव ॥ प्रथ्द्वहय् । इति तु न भवति ॥

## ॥ वीप्सायामाद्यात्पथन्वर्थे ॥१४९॥

अनुशब्दस्यार्थे गम्यमाने वीप्सायां द्विरुक्तशब्दस्य आद्यात् पथ्-प्रत्ययो भवति ॥ द्वहपथ् द्वह । अनुदिनम् ॥ वरिह्यपथ् वरिह्य । अनुवर्षम् ॥ ज़निपथ् ज़नि । अनुजनम् ॥ इत्यादि ॥

## ॥ इह्ब्रौंठ्शब्दाभ्यां वर्षार्थे उस् ॥१५०॥

स्पष्टम् ॥ इहुस् । ऐषमः ॥ ब्रौंठुस् [ । आगामिवर्षे ] ॥

## ॥ पथो रकारश्च ॥१५१॥

पथ्शब्दात् वर्षार्थे उस् प्रत्ययो भवति अन्त्यस्य रकारादेशश्च ॥ परुस् । परारि ॥

## ॥ पूर्वतरार्थे प्रार्यादेशः ॥१५२॥

पथ्शब्दात् पूर्वतरवर्षार्थे उस् प्रत्ययो भवति। पथ्शब्दस्य प्रा॑रि आदेशश्च॥ प्रा॑युस् । पूर्वतरे वर्षे ॥

## ॥ पञ्चम्यन्ताद्दिगर्थे कि॒नि ॥१५३॥

पञ्चमीप्रत्ययान्तेभ्यस्तदादिशब्देभ्यो दिगर्थे अभिधेये कि॒नि प्रत्ययो भवति [सू० १३२] ॥ ततिकि॒नि । ततः ॥ यतिकि॒नि । यतः ॥ कतिकि॒नि । कुतः ॥ इतिकि॒नि । इतः ॥ हुतिकि॒नि । अमुतः ॥ इत्यादि ॥ ब्रूँठिकि॒नि । अग्रतः ॥ प॑तिकि॒नि । पृष्ठतः ॥ दछि॒निकि॒नि । दक्षिणतः ॥ खोव्रिकि॒नि । वामतः ॥ त॒ल्किकि॒नि । अधरस्तात् ॥ प्य॑ठिकि॒नि । ऊर्ध्वतः ॥ इत्यादि ॥

एवमितरपञ्चम्यन्तेभ्यो यथा [सू० १३७] । तत्र प्रत्ययाद्येकारस्याकारः अन्त्यस्य तु पूर्णता दृश्यते ॥ तोरकनि । ततः ॥ योरकनि । यतः ॥ कोरकनि । कुतः ॥ ओरकनि वा होरकनि । अमुतः । इतः ॥

प्राणिकृतादेशेभ्यश्च यथा ॥ तमिकनि । तवकनि । ततः ॥ यमिकनि । यवकनि । यतः ॥ कमिकनि । कवकनि । कुतः ॥ इमिकनि । इवकनि । इतः ॥ हुमिकनि । अमिकनि । अवकनि । अतः ॥ एभ्य एव शब्देभ्यो ऽनन्तरवाचकः पतशब्दश्च प्रयोज्यः ॥ तमिपत । ततो ऽनन्तरम् ॥ तवपत । ततो ऽनन्तरम् ॥ इत्यादि बुद्धिमता स्वयं ज्ञेयम् ॥

## ॥ कालार्थे कालवाचिभ्यः ॥१५४॥

अज़्क्नि [। अद्य प्रायः] ॥ पगाह्क्नि [। श्वः प्रायः] ॥ कालिक्यथ्क्नि [। परश्वः प्रायः] ॥ ऊंत्रक्नि [। परह्यः प्रायः]॥ दंहुम्क्नि [। दशम्यां प्रायः]॥ हारक्नि [। आषाढ़मासे प्रायः] ॥ इत्यादि ॥

## ॥ अन्येभ्य इ् केवलश्च ॥१५५॥

तदादिशब्दव्यतिरिक्तेभ्यः अन्येभ्यः शब्देभ्यः केवल इ प्रत्ययश्च भवति दिगर्थे गम्यमाने ॥ ब्रूँठि। अग्रतः ॥ पंति। पृष्ठतः ॥ खोव्रि। वामतः ॥ दछिनि। दक्षिणतः ॥ तंलि। अधस्तात् ॥ प्यंठि। ऊर्ध्वतः ॥ इत्यादि ॥

## ॥ सर्वेभ्यः पांरि च ॥१५६॥

सर्वेभ्यः प्राणिकृतादेशतदादिभ्यः अन्येभ्यो ऽपि शब्देभ्यो दिगर्थे अभिधेये पांरि प्रत्ययो भवति ॥ कमिपांरि वा कपांरि। कस्मात्पार्श्वतः ॥ तमिपांरि वा तपांरि [। तस्मात्पार्श्वतः ] ॥ यमिपांरि वा यपांरि [। यस्मात्पार्श्वतः] ॥ इत्यादि ॥ हुमिपांरि वा हुपांरि [। अमुष्मात्पार्श्वतः ] ॥ इमिपांरि वा इपांरि [। अस्मात्पार्श्वतः]॥ अमिपांरि वा अपांरि [। अमुष्मात्पार्श्वतः]॥ दछिनिपांरि [। दक्षिणपार्श्वतः]॥ खोव्रिपांरि। वामपार्श्वतः ॥ ब्रूँठिपांरि [। अग्रपार्श्वतः ]॥ पतिम्पांरि [। पश्चात्पार्श्वतः] ॥ इत्यादि ज्ञेयम् ॥

## ॥ चोरो विश्वगर्थे च़्वच़्ववादेशौ च ॥१५७॥

च़ोरशब्दात्पांरि प्रत्ययो भवति च़ोरश्च च़्व च़्ववा आदेशौ भवतः ॥ च़्वपांरि वा च़्ववापांरि। विश्वतः ॥ विश्वगर्थे किम् ॥ च़ोरिपांरि। चतुष्पार्श्वतः ॥

## ॥ सप्तम्यन्तात्कुन् ॥१५८॥

सप्तमीप्रत्ययान्तेभ्यः शब्देभ्यो दिगर्थे गम्यमाने कुन् प्रत्ययो भवति ॥ तोर्कुन् । तस्यां दिशि ॥ योर्कुन् । यस्यां दिशि ॥ कोर्कुन् । कस्यां दिशि ॥ योर्कुन् । अस्यां दिशि ॥ होर्कुन् वा ओर्कुन् । अमुष्यां दिशि [सू० १३६] ॥ एवं । तंतुकुन् । तस्यां दिशि ॥ यंतुकुन् । यस्यां दिशि ॥ कंतुकुन् । [कस्यां दिशि ॥] इतुकुन् । [अस्यां दिशि ॥] हुतुकुन वा अंतुकुन् । [अमुष्यां दिशि] [सू० १३६] । इति ॥ तूर्य्कुन् । [तस्यामेव दिशि ॥] इत्यादयश्चोह्याः ॥ उकारशहितात्प्रत्ययादपि व्यवह्रियते ॥ तथ्कुन् । यथ्कुन् । कथ्कुन् । इथ्कुन् । हुथ्कुन् । अथ्कुन् । इति ॥ यप्रत्ययविशिष्टाच्च यथा ॥ तूर्य्कुन् । यूर्य्कुन् । तथ्य्कुन् । यथ्य्कुन् । इत्यादयः स्वयं विचार्याः ॥ एवं । गाम्कुन् । गरकुन् । कलिकुन् । वारिकुन् । [ह्वरुकुन ।] ह्युरुकुन् । ह्यूरुकुन् । ब्वन्कुन् । इत्यादि ॥ षष्ठ्यन्तालिङ्गादपि प्रयुज्यते ॥ मालिस् कुन् । पितुः पार्श्वे ॥ माज्य कुन् । मातुः पार्श्वे ॥ तमिस् कुन् । तस्य पार्श्वे ॥ यमिस् कुन् । [यस्य पार्श्वे ॥] इत्यादि ॥

## ॥ मयार्थे उवु ॥१५९॥

तन्मयः अस्तीत्यस्मिन्नर्थे उवु प्रत्ययो भवति ॥ स्वनुवु । स्वर्णमयः ॥ म्यछ़ुवु । मृण्मयः ॥ काठुवु । काष्ठमयः ॥ इत्यादि ॥

## ॥ अधीनार्थे बुज़्य् ॥१६०॥

तस्याधीनमित्यस्मिन्नर्थे बुज़्य् प्रत्ययो भवति ॥ लूकबुज़्य् । लोकाधीनम् ॥ खुडबुज़्य् । गर्ताधीनम् ॥ कलयबुज़्य् । भार्याधीनम् ॥ इत्यादि ॥

## ॥ अडल्यंकुशब्दो विकलार्थे ॥१६१॥

विकले वस्तुनि अभिप्रेते सति अडल्यंकु शब्दो निपात्यते ॥ अडल्यंकु ।

विकलः ॥ अडल्यंचू कोम्। विकला क्रिया ॥ अडल्यंचू लंरू। विकला शाला ॥ इत्यादि ॥

## ॥ अभ्रधूमवातमात्रायां रिंग् ॥१६२॥

एषां त्रयाणां विकलत्वे मात्रायामभिहितायां सत्यां रिंग् प्रत्ययः स्यात् ॥ अंब्रिंग्। अभ्रमात्रा ॥ दूहरिंग्। धूममात्रा ॥ वावरिंग्। वातमात्रा ॥ इति ॥

## ॥ प्राणप्रकाशयोर्लूथ् ॥१६३॥

प्राणप्रकाशयोर्मात्रायामभिहितायां लूथ् प्रत्ययो भवति। अत्र थकार आदेशकृतो ऽस्तीति ज्ञेयम् ॥ प्राणलूथ्। प्राणमात्रा ॥ शाहलूथ्। श्वासमात्रा ॥ गाशलूथ्। प्रकाशमात्रा ॥ चाँगिलूथ्। दीपमात्रा ॥

## ॥ पटस्य तूर् ॥१६४॥

पटस्य वस्त्रादेर्मात्रायां तूर् प्रत्ययो भवति ॥ कपर्तूर्। कार्पासखण्डः ॥ पंटितूर्। और्णखण्डः ॥

## ॥ छल्तिलिमावन्यतश्च ॥१६५॥

वस्त्रादेरन्यस्यापि मात्रायामभिहितायां छल् प्रत्ययः तिलिम् प्रत्ययश्च स्यात् ॥ कपर्तिलिम्। कार्पासखण्डः ॥ च्वच्यतिलिम्। अपूपखण्डः ॥ बुर्जतिलिम्। भूर्जखण्डः ॥ इत्यादि ॥ एवं। कपर्छल्। च्वच्यछल्। बुर्जछल्। पच्यछल्। पट्टीखण्डः ॥ कंद्रमाज़्छल्। यकृत्खण्डः ॥ इत्यादि ॥

| | धातुः । | अर्थः । |
|---|---|---|
| अ क [भा] | शष | सहने |
| | शहल | शीतीभवने |
| अ भा | शाश | उच्छ्वासनिःश्वासे |
| | [शिग्न | परेर्ष्यादाने] |
| | शिठ | शीनीभवने |
| | श्रिठ | च |
| | श्वङ्ग | शयने |
| | श्वद्व | शोधने |
| | शूव | शोभायाम् |
| अ क | शूबर् | शोभने |
| अ क | शूबराव | च |
| अ क [भा] | शौंक | शङ्कायाम् |
| अ क | शेर | संस्करणे |
| | श्रप | जीर्णने |
| अ भा | श्रुक | क्रन्दने |
| अ क | श्रुत | शब्दवत्पाने |
| | श्रोच् | शुद्धौ |

| | धातुः । | अर्थः । |
|---|---|---|
| | ॥ सकाराद्याः ॥ | |
| | सखर | प्रस्थाने |
| अ क | सगव | वृक्षादिसिञ्चने |
| अ क | सगनाव | च |
| अ क | संज़्र | अगाधीकरणे |
| अ क | संज़्राव | च |
| अ भा | सताव | बाधने |
| | सन | अगाधीभवने |
| अ क | सन्ज़्र | सज्जीकरणे |
| अ क | सन्द्र | संधुक्षणे |
| अ क | सन्द्राव | च |
| अ क | सन्द्रार | प्राणस्वास्थ्ये |
| | सपज़् | सिद्धौ |
| | सपद् | च |
| | सपन | च |
| | सम | साम्ये |
| | समख | समक्षीभवने |
| अ क | संबाल | संस्करणे |

| | धातुः । | अर्थः । |
|---|---|---|
| अ क | सर | स्मरणे |
| अ क [भा] | सह | सहने |
| | साँगर | विशरणे |
| अ क | साद | संराद्धौ |
| अ क | सार | स्वारैकत्रीभवनक्र-मानयनेषु |
| अ क | साव | शायने |
| अ क | स्यज़्र | ऋज्वीकरणे |
| अ क | स्यज़्राव | च |
| अ क | स्यज़्राव | अदृढीकरणे |
| | स्यद | सिद्ध्यृज्वीभवनयोः |
| | स्यन्द्र | अरुणीभवने |
| | स्यन्न | अकर्कशीभवने |
| अ क | सिव | सेवने पाकविशेषे च |
| | सीर | भ्रमणे |
| अ क | सुक | व्यभिचारे [अन्तरा-वेशने] |
| अ क | स्वखव | मृडने |
| अ क | स्वखनाव | च |

| | धातुः । | अर्थः । |
|---|---|---|
| | स्वग | मूल्याल्पतायाम् |
| अ क | स्वंग्राव | सुमूल्यीकरणे |
| अ क | स्वच्राव | शामने |
| | स्वत | शमने |
| अ क | स्वंम्बूर | समीकरणैकत्रीकरणयोः |
| अ क | स्वर | स्मरणे |
| अ क | सुरव | भाजनभस्मशुद्धौ |
| अ क | स्वर्श | हस्तादिशुद्धौ |
| अ क | सुलव | अङ्कपालने |
| अ क | सुव | सूचीकर्माणि |
| | स्वसर | काष्ठादिजीर्णने |
| अ क | सोज् | प्राणिप्रेषणे |
| | सोर | अवसाने |
| अ क [भा] | सूड | क्षमायाम् |
| अ क | सूत | संघट्टने |
| | स्रव | क्षरणे |
| | स्रग | मूल्याल्पतायाम् |
| अ क | स्रंग्राव | सुमूल्यीकरणे |

| | धातुः । | अर्थः । |
|---|---|---|
| अ भा | सूस | अपानवायौ |

॥ हकाराद्याः ॥

| | | |
|---|---|---|
| | हकर | कार्कश्ये |
| अ भा | हग | पुरीषोत्सर्गे |
| | हट | क्षीणीभवने |
| अ क | हंट्र | क्षीणीकरणे |
| अ क | हंट्राव | च |
| | हंन्द्र | शीतीभवने |
| अ क | हंन्द्राव | शीतीकरणे |
| | हप | कार्श्ये |
| | हम | शमने |
| | हर | क्षरणपतनयोः |
| | हल | वक्रतायाम् |
| अ क | हहर | विवाहकर्मणि |
| | हँांकल | शीतसंकोचने |
| | हँांठ | नैष्फल्ये |
| अ क | हँांठराव | निष्फलीकरणे |
| | हान | शैत्ये |

| | धातुः। | अर्थः। |
|---|---|---|
| | ह्मामन | शीतलापाके [श्यामीभवने] |
| अ क [भा] | ह्मार | पराजयनिपातयोः |
| अ क | ह्माव | दर्शने |
| अ क | ह्मि | ग्रहणक्रीणनधारणेषु |
| अ क | ह्यक | शक्तौ |
| अ क | ह्यछ | शिक्षायाम् |
| अ भा | ह्यड | परिभाषणे |
| | ह्मिल | प्रबलीभवने |
| | ह्वख | शोषे |
| अ क | ह्वंख्र | शोषणे |
| अ क | ह्वंख्राव | च |
| | ह्वच् | विस्त्रीभवने |
| अ क | ह्वंच्राव | विस्त्रीकरणे |
| अ क | ह्वंब्र | पराजयने |
| अ क | ह्वंब्राव | च |
| अ क | ह्मुम | होमे |
| अ क | ह्वंम्र | शामने |
| अ क | ह्वंम्राव | च |

| | धातुः । | अर्थः । |
|---|---|---|
| | होन | उत्कटीभवने |
| अ क | होर | प्रतिदाने |
| | ह्न | शोथे |
| | ह्र | उपचये |
| | ह्ल | प्रसवारम्भे |
| अ क | ह्सव | श्वादिसूचनायाम् |
| अ क | ह्सनाव | च |

इति श्रीशारदाक्षेत्रभाषाव्याकरणे कश्मीर-
शब्दामृते धातुपाठप्रक्रिया
समाप्ता ॥ ७।१ ॥

# अथ परिशिष्ट-नाम-धातवो लिख्यन्ते ॥२॥

| धातुः । | अर्थः । |
| --- | --- |
| अग्य-लगुन् | अग्नाविव रिप्वादिषु संमुखी-भवनम् । |
| अगादि-गछुन् | निष्कारणं क्रोधाविष्कारः । |
| खंखर्-दिञ् | जन्तुनो भूमौ भ्रामणम् । |
| छित-करुन् | तिरस्करणम् । |
| ज़ीरू-दिञ् | क्रोधाविष्काराय प्रेरणम् । |
| डाल-मारंञ् | उपेक्षाकरणम् । |
| ड्यम्ब्ड्यम्ब्-करुन् | अन्तःसुषिरस्य शब्दानुक-रणम् । |
| तोथ्-करंञ् | अहंकारपूर्वकं भर्त्सनम् । |
| दाम्-ध्युन् | स्तन्यवत्पानम् । |
| दारिथ्-ध्युन् | प्रपातनम् । |
| निन-युन् | अनवधानता । |
| न्यूरु-युन् | समीपागमनम् । |
| पाय्-करुन् | उपायकरणम् । |
| फूह्-करुन् | कोपपूर्वकं चोदनम् । |

| धातुः । | अर्थः । |
|---|---|
| फश्-युन् | विनष्टीकरणम् । |
| वर्-गछुन् | अनादरेण रोषणम् । |
| मान्मान्-करुञ् | स्पर्धाकरणम् । |
| रथि-खारुन् | सफलीकरणम् । |
| वंनु-युन् | स्मृतिपूर्वकमन्वेषणम् । |
| वस्य-प्यंनु | हृदयंगमीभवनम् । |
| वोडाल-करुन् | उपेक्षाकरणम् । |
| सर-करुन् | निर्णयीकरणम् । |
| स्वर्-करुन् | ईषच्चेष्टाकरणम् । |
| हक-युन् | शीघ्रागमनम् । |

[ अन्ये ऽपि यथायोगं बोध्याः । ]

इति श्रीशारदाक्षेत्रभाषाव्याकरणे कश्मीरशब्दामृते धातुप्रक्रियायाः परिशिष्टे नाम धातवः समाप्ताः ॥ ७ । २ ॥

ॐ श्रीविघ्नहर्त्रे नमः ॥

# अथाख्यातप्रक्रियायाम् ॥ ८ ॥

## वर्तमानपादः ॥ १ ॥

अथशब्दो मङ्गलार्थः ।

**॥ कालत्रयतद्विशेषक्रियाकर्मकर्त्रवबोधकृदाख्यातः ॥ १ ॥**

कालत्रयस्य भूतभविष्यद्वर्तमानरूपस्य तद्विशेषाणां विध्यादीनां क्रियाकर्मणोः कर्मकर्तरि तथा विभक्तिस्वरूपेष्वप्रयुक्तत्वच्छब्दादिकर्तृषु क्रियाकर्त्रोश्चावबोधकृत्सम्यग्बोधकारक आख्यातो विज्ञेयः ॥

**॥ आरब्धानारब्धसमापितक्रियाकाला वर्तमानभविष्यद्भूतसंज्ञाः ॥ २ ॥**

आरब्धक्रियाकालो वर्तमानसंज्ञः । अनारब्धक्रियाकालो भविष्यत्संज्ञः । समापितक्रियाकालो ऽतीतसंज्ञो भवति ॥

## ॥ अश्रोतृश्रोतृवक्तृभेदात्प्रथममध्यमोत्तमाः ॥३॥

तेषु कालत्रयेषु तद्विशेषेषु च प्रत्येकस्मिन् अश्रोता प्रथमपुरुषः । श्रोता मध्यमपुरुषः । वक्ता उत्तमपुरुषो बोध्यः । अश्रोतेति लक्षणात्संनिधाने ऽपि पुरुषे अयं करोतीति श्रोतारं वदेत्त्वमपि कुर्विति किमुतासंनिधाने इति निर्णयम् ॥

## ॥ एकानेकाभ्यां द्वे द्वे वचने ॥ ४ ॥

तेषु त्रिषु पुरुषेषु प्रत्येकस्मिन्नेकवचनबहुवचनभेदाद्द्वे द्वे वचने भवतः ॥ सुह् छुह् परान् । सः पठति ॥ तिम् छिह् परान् । तौ पठतः वा ते पठन्ति ॥

## ॥ युगपदुक्तौ वाचकासन्नो मुख्यः ॥ ५ ॥

द्वयोस्त्रयाणां वा पुरुषाणां युगपत्क्रियाया उक्तौ सत्यां वाचकासन्नः पुरुष एव मुख्यो विज्ञेयः । तद्यथा । तच्छब्दयुष्मच्छब्दयोर्युगपद्वचने वाच्ये वाचकासन्नो युष्मच्छब्द एव मुख्यः संमुखत्वात् । एवं युष्मच्छब्दास्मच्छब्दयोर्युगपद्वचने वाच्ये वाचकस्यात्मैवासन्नतरः । अतस्तत्रास्मच्छब्दस्य मुख्यत्वम् । एवं तच्छब्दास्मच्छब्दयोस्त्रयाणामप्यवधार्यः ॥ सुह् त च़ह् परिव् । स च त्वं पठतम् ॥ च़ह् त ब़ह् परव् । त्वं चाहं पठाव ॥ सुह् त ब़ह् परव् । स चाहं पठाव ॥ सुह् त च़ह् त ब़ह् परव् । स च त्वं चाहं पठाम ॥

## ॥ धातोः परे प्रत्ययाः ॥ ६ ॥

कालत्रयसंबन्धिविभक्तिप्रत्यया धातोः परे भवन्तीति परिभाष्यते ॥ परान् छुह् । पठति ॥ परुन् । अपठत् ॥ परि । पठिष्यति ॥

## ॥ तदात्वारब्धे वर्तमाना ॥ ७ ॥

तत्काळे आरब्धे कर्मणि धातोर्वर्तमाना विभक्तिर्भवति ॥ पकान् छुह् । गच्छति ॥ परान् छुह् । पठति ॥

## ॥ नैर्यन्तरारब्धे च ॥ ८ ॥

यस्याः क्रियायाः कदाचिदपि उच्छित्तिर्न स्यात्तत्कर्म निरन्तरारब्धम् तस्मिन्नपि वर्तमाना विभक्तिर्भवति ॥ ईश्वर् जगतस् रछान् छुह् । ईश्वरो जगद्रक्षति ॥ पान पानस् रछान् छुह् । आत्म [न]ा त्मानं पाळयति ॥

## ॥ नियमारब्धे च ॥ ९ ॥

प्रतिकुम्भं गङ्गायाः स्नानं करिष्यामीत्यादिनियमेन या या क्रिया आरब्धा स्यात्तस्यां वाच्यायां सत्यां तत्र वर्तमाना विभक्तिर्भवति ॥ व्याकरण् परान् छुह् लवकुट्ठ । व्याकरणमधीते बालः ॥ गंगाय गछान् छुह् प्रथ् कुंबस् । गङ्गां गच्छति प्रतिकुम्भम् ॥

## ॥ अनेककार्यवित्कर्तृसत्तायां तत्तत्क्रिया धातुभ्यश्च ॥ १० ॥

एकाधिककार्यज्ञस्य कर्तुः सत्तायां देहपाताभावे सति तत्संबन्धिषु कर्मस्वभिधेयेषु सत्सु धातुभ्यो वर्तमाना विभक्तिर्भवति । एककार्यज्ञस्य तु नियमारम्भतो वर्तमानाप्राप्तिरासीदिति ॥ क्याह् छुह् मुर्ख् करान् । किं मूर्तीः कुर्वन्नस्ति ॥ क्याह् छुह् जान् लेखान् । किं साधु लिखन्नस्ति ॥ क्याह् छुह् रतु ग्यवान् । किं साधु गायन्नस्ति ॥ कथनसमकालमेव यदि प्रोक्तक्रियाविदो देहपातः स्यात् तदातीतावाप्तिर्भवेन्न तु वर्तमानाप्राप्तिरित्यादिविशेषा बुद्धिमद्भिः स्वयमूह्याः । किं च वर्तमानस्य केवलं न संप्रतिकालीनक्रियातो

वर्तमानसंज्ञास्ति किंतु वर्तमानकर्तृसत्त्वे एव प्रायशो वर्तमानसंज्ञास्तीति ॥

## ॥ वर्तमानायां छुह् छिह् छुख् छिव छुस् छिह् पुंसि ॥ ११ ॥

## ॥ छ्यह् छ्यह् छ्यख् छ्यव छ्यस् छ्यह् स्त्रियाम् ॥ १२ ॥

पुंकर्तरि यथा ॥ करान् छुह् । सः करोति ॥ करान् छिह् । ते कुर्वन्ति ॥ करान् छुख् । त्वं करोषि ॥ करान् छिव । यूयं कुरुथ ॥ करान् छुस् । अहं करोमि ॥ करान् छिह् । वयं कुर्मः ॥ स्त्रीलिङ्गे यथा । करान् छ्यह् । सा करोति ॥ करान् छ्यह् । ताः कुर्वन्ति ॥ करान् छ्यख् । त्वं करोषि स्त्री० ॥ करान् छ्यव । यूयं कुरुथ स्त्री० ॥ करान् छ्यस् । अहं करोमि स्त्री० ॥ करान् छ्यह् । वयं कुर्मः स्त्री० ॥ कर करणे । छुह् आदयः प्रत्ययाः । धातोरानागम (सू० १९) इति आन् । व्यञ्जनं परेण संधेयम् (सू० १।३) ॥

## ॥ क्रियाऽभावे नपराः ॥ १३ ॥

क्रियाया अभावे अभिधेये सति ते प्रत्यया नपरा नकारः परो येभ्यस्तथा स्युः ॥ करान् छुन । न करोति ॥ करान् छिन । न कुर्वन्ति ॥ करान् छ्यन । सा न करोति ॥ करान् छ्यख्न । त्वं न करोषि ॥ कर करणे । छुह् प्रत्ययस्तस्मान्नप्रत्ययः । धातोरानागमः(सू०१९) । प्रत्ययेषु हलोपः सर्वत्र(सू०४।१३१) इति हकारलोपः । एवं सर्वेषाम् ॥

## ॥ कामप्रवेदने आपराः ॥ १४ ॥

क्रियायाः कामप्रवेदने सति विभक्तिप्रत्यया आपरा आकारः परो येभ्यस्तथा स्युः । क्रियाभावस्य कामप्रवेदने सति न प्रत्यय आपरो भवति ॥ करान्

छ्वा । स किं नु करोति ॥ करान् छ्या । सा किं नु करोति ॥ कर करणे । छुह् छ्यह् प्रत्ययौ आपरौ । प्रत्ययेषु हलोपः सर्वत्र (सू० ४।१३१) इति ह लोपः । धातोरानागमः (सू० १९) । छु इत्यस्य उकारो वः (सू० १।११) इत्यनेन वत्वे कृते । अपरत्र स्वरः सवर्णे दीर्घपरलोपौ (सू० १।५) । व्यञ्जनं परेण संधेयम् (सू० १।३) । एवं करान् छुना । किं न करोति ॥ करान् छ्यना । सा किं न करोति ॥ अत एव निर्देशाद्यथा नकारान्तस्या ऽऽप्रत्ययः स्यात्तथा तिप्रत्ययान्तस्यापि बोध्यः (सू० ४।१७९) । करान् छुत्या । अपि किं करोति ॥ कर्यौनुत्या । अपि किं चकार ॥ करित्या । अपि किं करिष्यति ॥

## ॥ मध्यमैकत्वादित्रये ऽपरा वा ॥ १५ ॥

कामप्रवेदने सति मध्यमैकत्वानेकत्वयोरुत्तमैकत्वे च अपरा अकारः परो येभ्यस्तथा वा विकल्पेन स्युः । न क्रियाभावकामप्रवेदने नकारस्य स्वयमकारान्तत्वात् । किं चादरवत्सु संबोधनप्रत्ययेषु चायमेव मुख्यः । प्रथमस्तु । आ प्रत्ययः कनिष्ठनीचयो ( सू० २ । २ । ७ ) रिति लिङ्गप्रकरणोक्तसूत्रेण तयोरेवावगन्तव्यः ॥ करान् छुख । वा । करान् छुखा । किं त्वं करोषि ॥ करान् छिव । वा । करान् छिवा । किं यूयं कुरुथ ॥ करान् छुस । वा । करान् छुसा । किमहं करोमि ॥ साधनं पूर्ववत् ॥

## ॥ अपरा अय्परा वा स्त्रियां मध्यमे ॥ १६ ॥

स्त्रियाः सकाशात्कामप्रवेदने कर्तव्ये मध्यमपुरुषे प्रत्यया अकारपरा अय्परा वा भवन्ति । अत्रापि अय् प्रत्ययः । कनिष्ठनीचयो (सू० २।२।७) रित्य[र्थे] लिङ्गप्रकरणोक्तसूत्रानुसारतो बोध्यः ॥ करान् छ्यख । वा । करान् छ्यखय् । किं त्वं करोषि स्त्री० ॥ करान् छ्यव । वा । करान् छ्यवय् । किं यूयं कुरुथ स्त्रियः ॥ करान् छ्यख्ना । वा । करान् छ्यख्नय् । किं त्वं न करोषि ॥ करान् छ्यवना । वा । करान् छ्यवनय् । किं यूयं न कुरुथ ॥

## ॥ उत्तमैकत्वे पुंस्त्रियोः क्रमात् ॥ १७ ॥

पुरुषाय स्त्रिया कामप्रवेदने वाच्ये सति अकारपरो भवति । स्त्रिये स्त्रिया वाच्ये सति अय्परो भवति ॥ करान् छ्यस । किमहं करोमि ॥ करान् छ्यसय् । किमहं करोमि ॥

## ॥ बहुत्वे आ अय्पराः ॥ १८ ॥

पुरुषाय वाच्ये आपराः स्त्रिये वाच्ये अय् परा भवन्ति । प्रथमपुरुष-प्रत्यययोरुत्तमानेकत्वछ्यह् प्रत्ययेन सादृश्यात्तयोरपीत्थं विज्ञेयम् ॥ करान् छ्या स्वह् । सा किं नु करोति ॥ करान् छ्या तिम । ताः किं नु कुर्वन्ति ॥ करान् छ्या असि । वयं किं नु कुर्मः ॥ करान् छ्यय् । किं नु वयं कुर्मः ॥ एवमन्ययोरपि ॥

## ॥ धातोरानागमः ॥ १९ ॥

वर्तमानाया विषये धातोः पर आन् आगमो भवति ॥ करान् छुह् । करोति । साधितमेव ॥

## ॥ इकारान्ताद्वपूर्वः ॥ २० ॥

इकारान्ताद्धातोरान् आगमो वकारपूर्वो भवति अर्थात् वान् आगमः स्यात् ॥ निवान् छुह् । हराति ॥ दिवान् छुह् । ददाति ॥ यिवान् छुह् । आयाति ॥ नि हरणे । दि दाने । यि आगमने । वर्तमानायां पुंसि छुह् प्रत्ययः । अनेन वान् आगमः ॥ ख्यवान् छुह् । खादति ॥ च्यवान् छुह् । पिबति ॥ खि खादने । चि पाने । छुह् प्रत्ययः । अनेन वान् आगमः । सर्वत्राकारागमोऽनिदियिवर्जितात् ( सू० ८ । २ । ११ ) इति सूत्रेण धातुस्वरादकारागमः ।

इकारो ऽसवर्णे यो ऽपरलोप (सू० १।१०) इति सूत्रेण इकारस्य यत्वम् । व्यञ्जनं परेण संधेयम् ( १ ।३ ) ॥

## ॥ आसो लोपो धातोश्च ॥ २१ ॥

आस सत्तायामित्यस्माद्धातोरान् प्रत्ययस्य लोपो भवति । आस धातोश्च लोपः स्यात् ॥ छुह् । अस्ति ॥ छिह् । सन्ति । इत्यादि ॥ आस सत्तायां । वर्त्तमानायां छुह् प्रत्ययः । धातोरानागमः (सू० १९) । अनेन लोपः आस धातोश्च ॥

## ॥ वाक्येष्व ऽयं प्रयोगो मुख्यः ॥ २२ ॥

सर्वेषां वाक्यानां लालित्ये अयम् अस्त्यर्थकः छुह् प्रयोगो मुख्यो ऽवधार्यः ॥ बत छुह् सुह् ख्यवान् । भक्तमस्ति सः खादन् ॥ बत सुह् ख्यवान् छुह् । भक्तं स खादति । इति गौणः ॥

## ॥ वाक्यारम्भपदात्परो मुख्यः ॥ २३ ॥

वाक्यारम्भस्य यदारम्भपदं स्यात्तस्मान्मुख्यः प्रयोगः प्रयोज्यः ॥ तव पत छुह् आसनस् प्यठ् बिहिथ् पूज़ा करान् । ततः अस्ति आसनोपरि निविश्य पूजां कुर्वन् ॥

## ॥ वाक्यान्ते गौणः ॥ २४ ॥

गौणो वर्तमानायाः क्रियास्वरूपं वाक्यान्ते प्रयोज्यम् ॥ तव पत आसनस् प्यठ् बिहिथ् पूज़ा करान् छुह् । तत आसनोपरि निविश्य पूजां करोति ॥ यद्यपि प्रथमोत्तरे वाक्ये एकार्थके स्तः परं तु वाग्लालित्ये प्रथममेव ज्यायः । किं चात्र वाक्ये स्पष्टं प्रतीयते ॥ ईश्वर् छुह् आसान् कांशिय अन्दर् । ईश्वरः अस्ति भवन् काश्याम् ॥ एवमतीतादिषु च निश्चीयत इति ॥

## ॥ क्रियायाः किमादिशब्दस्वरूपेभ्यो वा सन-प्रत्ययः शङ्कायाम् ॥ २५ ॥

कामप्रवेदनस्य शङ्कायामभीप्सितायां क्रियायाः परः किमादिशब्दस्वरूपेभ्यो वा परः सन प्रत्ययो भवति । यत्र वाक्ये सार्वनामिकं ककारादि शब्दस्वरूपं स्यात्तत्रावश्यं तस्मात्पर एव भवति । यत्र तु न भवेत्तत्र क्रियायाः पर एव भवति । ख्यवान् छ्वासन । किं नु खादति ॥ क्यासन ख्यवान् छ्वा । किं नु खादति ॥ बट कैत्यासन आसान् छिह् । किं नु ब्राह्मणाः कतिचन भवन्ति ॥ कर्सना बा॑गि यिवान् छुह् । कस्मिन्दिनरात्रिभागे आयाति ॥ अत एव ज्ञापकाद्यथा सन प्रत्ययो भवति तथा संप्रश्ने ऽपि किमादिस्वरूपेभ्यः संबोधनमुख्यप्रत्ययाश्च भवन्तीति ॥ कैत्यासा लूख् आ॑सि । कियन्तो लोका आसन् ॥

## ॥ तेभ्यस्ताज़्ताज़तौ स्वाज्ञातायाम् ॥ २६ ॥

तेभ्यः सार्वनामिकककारादिस्वरूपेभ्यः परस्ताज़् प्रत्ययस्ताज़त् प्रत्ययो वा भवति आत्मनो ऽज्ञातायामाशङ्कायां विवक्षितायां सत्याम् ॥ क्याह् ताज़् वंनुन् । वा क्याह् ताज़त् वंनुन् । किंचिदुक्तम् ॥ एवं । कर् ताज़् आव् । कस्मिंश्चित्काले आगतः ॥ कूतु ताज़् दितुन् । कियन्मितं दत्तम् । इत्यादि ॥ अत्र प्रत्ययज़कारस्य विकल्पेन मकारो भवति । तत्र क्याह् ताम् वंनुन् [ । किंचिदुक्तम् ] ॥ इत्यादि स्यात् ॥

## ॥ ड्यठातिशये पूर्वं च ॥ २७ ॥

तेभ्यः सार्वनामिकककारादिस्वरूपेभ्यः पूर्वं ड्यठशब्दः प्रयोज्यः तत्तत्स्वरूपस्यातिशयार्थे गम्यमाने ॥ ड्यठ कर् आव् । वा ड्यठ कन आव् । चिरागतः ॥ ड्यठ क्याह् [ । अतिशयः ] ॥ ड्यठ कूति [ । अनल्पाः ] ॥ ड्यठ कनि [ । चिरेण ] ॥ इत्यादि ॥

## ॥ आपरो वा ॥ २८ ॥

स सन प्रत्यय आकारः परो यस्मात्तथा वा भवति ॥ क्यासना ख्यवान् छुह् । किं वस्तु नु खादति ॥ कर्सना यियि । कदा नु आगच्छेत् ॥ कूतिसना आसहान् । कतिचन स्युः ॥ कतिसना ओसु । कुत्र नु आसीत् ॥

## ॥ माशब्द आदावन्ते वा ॥ २९ ॥

आशङ्कायां सत्यां क्रियायाः पूर्वं पश्चाद्वा माशब्दः प्रयोज्यः ॥ करान् मा छुह् [ । करोति मा स्वित् ] ॥ मा छुह् करान् [ । मा स्वित्करोति ] ॥ मा करान् छुह् [ । मा करोति स्वित् ] ॥ कर्योन्मा [ । मा कार्षीत्स्वित् ] ॥ सुह् मा करि [ । करिष्यति मा स्वित् ] ॥ ब्रह् मा कर [ । अहं मा स्वित् करिष्यामि ] ॥

## ॥ वाद्यः पाद्यो वा ऽऽनुप्रासिकशब्दः ॥ ३० ॥

यस्य कस्यचिच्छब्दस्यानुकरणशब्दे कर्तव्ये तस्यैव शब्दस्याद्याक्षरं वकारेण पकारेण वा विपर्यस्य आनुप्रासिकशब्द उच्चारणीयः ॥ करान् वरान् छुह् । करोतीत्यादि ॥ द्यार् व्यार् अनिन् । धनादिकमानयतु ॥ बत वत ख्ययिन् । भक्तादि भक्षयतु ॥ अन्वार् वन्वार् [ । क्रमप्राप्तिः ] ॥ अन्वार् पन्वार् ॥

## ॥ तयोरेकतराद्ये तदितरः ॥ ३१ ॥

तयोर्वकारपकारयोर्मध्यात् एकतरे शब्दस्य आद्याक्षरे सति तस्मादितरः प्रयोज्यः वकाराद्ये पकारः पकाराद्ये वकार इति ॥ पर् वर् । पठेत्यादि ॥ पैँस वैँस दितिन् । पणाद्यदात् ॥ वाँगन् पाँगन् अन । वृन्ताकाद्यानय ॥

वाज़ पाज़ छिह् । सूदादयः सन्ति ॥ व्युचु शब्दस्य पोचु शब्द आनुप्रासिको बोध्यः । व्युचु पोचु । संग्रह इत्यादि ॥

## ॥ अन्येनापि क्वचित् ॥ ३२ ॥

स आनुप्रासिकशब्दो ऽन्येन वर्णेन विपर्यस्य क्वचिद्व्यवह्रियते सार्थकशब्देन वा ॥ निकु सुकु । संभारादि ॥ ह्यंडु ठ्यंडु । ग्रासादि ॥ हंलु कंलु । वक्रादि ॥ हंलु वंलु । परिकरादि ॥ हांन्जू गांन्जू । नाविकादि ॥ फंलु फर्यंतु । भूषणादि ॥ ओन्तु वोन्तु । उत्तानादि ॥

## ॥ तच्छब्दस्यैकत्वेन क्रियासंबन्धे ऽस् ॥ ३३ ॥

कर्ता यां क्रियां तस्यार्थं विदधाति तस्याः क्रियायाः परः अस् प्रत्ययः सर्वत्र स्यात् ॥ करान् छुस् । तस्यार्थं करोति ॥ करान् छिस् । तस्यार्थं कुर्वन्ति ॥ करान् छुसस् । तस्यार्थं करोमि ॥ करान् छिस् । तस्यार्थं कुर्मः ॥ कर करणे । वर्तमानायां प्रथमैकबहुत्वे पुंसि छुह् छिह् प्रत्ययौ धातोरानागम (सू० १९) इति आन् । अनेनान्ते अस् प्रत्ययः । प्रत्ययेषु हलोपः सर्वत्र (सू०४।१३१) इति हकारलोपः । अस् प्रत्ययस्य स्वरादल्लोपः (सू०३९) इत्यकारल्लोपः । एवमन्यत् ॥

## ॥ कर्मण्यन् ॥ ३४ ॥

तच्छब्दस्यैकत्वे कर्मणि सति क्रियायाः परः अन् प्रत्ययो भवति सर्वत्र ॥ करान् छुहन् । तं करोषि ॥ ख्यवान् छुहन् । तं खादसि ॥

## ॥ बहुत्वेनाख् ॥ ३५ ॥

तेषामर्थे यां क्रियां निर्वर्तयेत्तच्छब्दस्य बहुत्वे वा कर्मणि सति क्रियायाः

परः अख् प्रत्ययः स्यात् सर्वासु विभक्तिषु ॥ करान् छुख्। तेषामर्थे करोति॥ करान् छिख्। तेषामर्थे कुर्वन्ति॥ करान् छुसख्। तेषामर्थे करोमि॥ करान् छिख्। तेषां [ अर्थे ] कुर्मः। साधनं पूर्ववत्॥

## ॥ त्वच्छब्दे कर्मणि भूते च ॥ ३६ ॥

अतीतकालिकक्रियायास्त्वच्छब्दे कर्मणि सति क्रियायाः परः अख् प्रत्ययः स्यात्॥ कर्योनख्। तेन चक्रुषे॥ कंरुमख्। मया चक्रुषे॥

## ॥ भविष्यद्वर्तमानोत्तमेप्यथ् ॥ ३७ ॥

त्वच्छब्दे कर्मणि सति भविष्यन्त्या वर्तमानाया उत्तमपुरुषे ऽपि क्रियायाः परः अथ् प्रत्ययः स्यात्॥ करथ्। त्वां करिष्यामि॥ करोथ्। त्वां करिष्यामः॥ करान् छुसथ्। त्वां करोमि॥ करान् छिथ्। त्वां कुर्मः॥

## ॥ प्रत्यये प्रत्ययखकारस्य हः ॥ ३८ ॥

तत्संबन्धादिप्रत्ययेषु परेषु प्रत्ययसंबन्धिनः खकारस्य हकारो भवति॥ करान् छुहस्। तस्यार्थे करोषि॥ करान् छुहख्। तेषामर्थे करोषि॥ कर करणे। वर्तमानायां मध्यमैकत्वे छुख्। आन् आगमः ( १९ सूत्रेण ) तच्छब्द (सू० ३३-३९) इत्यादिना अस् अख् प्रत्ययौ। अनेन खकारस्य हकारः। व्यञ्जनं परेण संधेयम् ( सू० १।२ )॥

## ॥ स्वरादल्लोपः ॥ ३९ ॥

प्रत्ययस्वरात्परस्य अकारस्य लोपो भवति॥ करान् छुस्। तस्मै करोति॥ करान् छिस्। तस्मै कुर्वन्ति॥ करान् छिवस्। तस्मै कुरुथ॥ करान् छिवख्।

तेभ्यः कुरुथ ॥ प्रथमयोरीकारस्य लोपे कृते अनेन अकारलोपः । शेषं स्पष्टम् ॥

## ॥ त्वच्छब्देनाय् ॥ ४० ॥

युष्मच्छब्दैकवचननियतेन त्वच्छब्देन सह क्रियासंबन्धे सति क्रियायाः परः अय् प्रत्ययो भवति सर्वासु विभक्तिषु ॥ करान् छुय् । तुभ्यं करोति ॥ करान् छिय् । तुभ्यं कुर्वन्ति ॥ करान् छुसय् । तुभ्यं करोमि ॥ करान् छिय् । तुभ्यं कुर्मः ॥ साधनं पूर्ववत् ॥

## ॥ युष्मदा ऽवः ॥ ४१ ॥

युष्मच्छब्देन क्रियासंबन्धे सति क्रियायाः परः सर्वत्र अव प्रत्ययो भवति ॥ करान् छुव । वः करोति ॥ करान् छिव । वः कुर्वन्ति ॥ करान् छुसव । वः करोमि ॥ करान् छिव । वः कुर्मः ॥ क्वचित्संबोधनवत्प्रोक्तौ प्रत्ययौ भवत इति ॥

## ॥ मच्छब्देनाऽम् ॥ ४२ ॥

अस्मच्छब्दैकत्वनियतप्रयोगेण मच्छब्देन सह संबन्धे सति क्रियापरः अम् प्रत्ययः स्यात् ॥ करान् छुम् । मां [ वा ] मे करोति ॥ करान् छिम् । मां [ वा ] मे कुर्वन्ति ॥ करान् छुहम् । मे करोषि ॥ करान् छिवम् । मां [ वा ] मे कुरुथ । साधनमुक्तवत् ॥

## ॥ कर्मण्यस् भूते ॥ ४३ ॥

मच्छब्दे कर्मणि सति अतीतकाले क्रियायाः परः अस् प्रत्ययः स्यात् ॥ कर्योनस् । तेनाहं चक्रे ॥ कर्योथस् । त्वयाहं चक्रे ॥

## ॥ बहुत्वे ऽस्मत्प्रयोगसंबन्ध एव च ॥ ४४ ॥

अस्मच्छब्देन क्रियासंबन्धे सति क्रियायाः परः पूर्वं वा अस्मच्छब्दानेकत्वप्रयोग एव प्रयोज्यः ॥ करान् छुह् अस्य । नः करोति ॥ करान् छिह् अस्य । नः कुर्वन्ति ॥ अस्य करान् छुख् । नः करोषि ॥ अस्य करान् छिव । नः कुरुथ ॥ एवं स्त्रीलिङ्गनियतप्रत्ययेषु च त्वच्छब्दादिसंबन्धप्रत्यया अवगन्तव्याः । तेभ्यश्च कामप्रवेदनतदभावादिप्रत्ययाश्च स्वयमेवावधार्याः । विस्तृतिभयान्नोदाहृताः ॥

## ॥ चरफ्वशफुहमर्च्वुचफिचां नित्यं संबन्धप्रत्ययाः ॥ ४५ ॥

चर अन्तःकोपे । फ्वश फुह अमर्षे । मर्च अन्तःकोपे । वुच दग्धीभवने । फिच विस्मरणे । एषां प्रोक्तसंबन्धप्रत्यया नित्यं भवन्ति ॥ चरान् छ्यस् । [। अन्तःकोपो ऽस्य भवति ]॥ फ्वशान् छ्यस् । फुहान् छ्यस् [। असहनमस्यास्ति]॥ मर्चान् छ्यस् [। अन्तः कोपो ऽस्य भवति ]॥ वुचान् छ्यस् [। अन्तर्दाहो भवत्यस्य ]॥ फिचान् छ्यस् [। विस्मृतिर्भवत्यस्य ]॥ साधनं सुगमम् । एषां धातुपाठे नित्यस्त्रीलिङ्गकथनात्स्त्रीलिङ्गप्रत्यय एव ॥

## ॥ षष्ठी कर्तरि सर्वत्र ॥ ४६ ॥

एषां धातूनां सर्वासु विभक्तिषु षष्ठी कर्तरि भवति ॥ तमिस् चरान् छ्यह् ॥ एषां सर्वेषां यत्र कर्तरि प्रयुज्यमाने सति तत्र संबन्धिप्रत्ययानामनित्यता बोध्येति ॥

## ॥ गछो ऽपि योग्यार्थेत्र ॥ ४७ ॥

गछ गतौ सामञ्जस्ये । इत्यस्य योग्यार्थविषये अत्र षष्ठी कर्तरि भवति ॥

---

[ ४७ । योग्यार्थ इत्यत्र अभीष्टार्थे ऽपि चरितार्थता । ]

तमिस् गछ़ान् छुह् ज़ि परहा [। तस्याभीष्टमहं योग्यो ऽस्मि पठेयमिति ]॥

## ॥ प्रथमैकानेकत्वे च ॥ ४८ ॥

तस्यैव धातोरत्र वर्तमानाविभक्तौ नित्यं प्रथमपुरुषस्य एकत्वबहुवचनप्रत्ययावेव भवतः न तु मध्यमपुरुषादयः। किं तु ते संबन्धिप्रत्ययैर्विविच्यन्ते॥ गछ़ान् छुस्। गछ़ान् छुख्। गछ़ान् छुय्। गछ़ान् छुव। गछ़ान् छुम्। गछ़ान् छुह्॥

## ॥ सर्वत्रानः सकर्मकेभ्यः कर्मकर्तरि ॥ ४९ ॥

सर्वत्र सर्वेषु कालेषु सकर्मकेभ्यो धातुभ्यः परः कर्मकर्तरि अन प्रत्ययो भवति॥

## ॥ पूर्वे परे वा यिधातुरूपतः ॥ ५० ॥

स अनप्रत्यययुक्तो धातुः पूर्वे वा परे यि आगमने इत्यस्य धातोः स्वस्वकालीनप्रयोगान्तर्वर्ति यद्रूपं स्यात्तस्मात्प्रयोज्यः ततः कर्मकर्तृप्रयोगा भवन्ति॥ रनन यिवान् छुह् बत। भक्तं पच्यते॥ बत छुह् रनन यिवान्। भक्तं पच्यते॥ पानय् छुह् यिवान् करन। स्वयं क्रियते। अर्थात् कृतं भवति॥ रन पाके पूर्वसूत्रेण (४९) अन प्रत्ययः। यि धातोः यिवान् छुह् इति रूपात्पूर्वं रनन इति प्रयुक्तः। अपरत्र वर्तमानापरस्वरूपे यिवान् इत्यस्मात्पूर्वं प्रयुक्तः। तृतीये तु परः॥

## ॥ वा ऽकर्मकेभ्यः ॥ ५१ ॥

अकर्मकेभ्यो धातुभ्यः प्रोक्ता क्रिया वा विकल्पेन भवति। किंच विभक्तिप्रयोगा अपि स्वयं कर्मकर्तृप्रयोगा भवन्ति॥ ज़ोतान् छुह्। वा। ज़ोतन यिवान् छुह्। दीप्यते॥ दज़ान् छुह्। वा। दज़न यिवान् छुह्। दह्यते॥ ज़ोत दीप्तौ। दज़ भस्मीभवने। शेषं पूर्ववत्॥

## ॥ बोज़ः कर्मकर्ता चाक्षुषज्ञान एव नित्यम् ॥५२॥

बोज निशामने इति धातोः कर्मकर्तृस्वरूपं नित्यं चाक्षुषज्ञान एव भवति न तु श्रवणज्ञाने ॥ बोज़न यिवान् छुह् । स्वयं दृष्टं भवति ॥ बोज़न आव् । दृष्टिमागतः ॥ बोज़न यियि । दृष्टिमागमिष्यति ॥ श्रवणज्ञाने तु । बोज़ान् छुह् । शृणोति । न तु दृश्यते ॥ बोज़नस् अन्दर् यिवान् छुह् । श्रवणमागच्छतीति कर्मकर्तृस्वरूपं सेत्स्यति ॥

## ॥ गरः काठिन्ये च ॥ ५३ ॥

गर घट्टने इत्यस्य कर्मकर्तृस्वरूपं काठिन्ये भवति चशब्दात्स्वार्थे च ॥ गरन यिवान् छुह् । कठिनीभवति । घटितं च भवति ॥

## ॥ डेषो ऽनो लोपो ड्रैँठादेशश्च ॥ ५४ ॥

डेष प्रेक्षणे इत्यस्मात् अन प्रत्ययस्य लोपो भवति डेषश्च ड्रैँठ् आदेशो भवति ॥ ड्रैँठ् यिवान् छुह् । दृष्टिमायाति ॥ डेषन यिवान् छुह् । इति न साधु-शब्दः ॥

## ॥ नेश्चाञ्चल्ये ऽपि ॥ ५५ ॥

नि हरणे इत्यस्य कर्मकर्ता चाञ्चल्ये भवति अपिशब्दात्स्वार्थे ऽपि ॥ निन यिवान् छुह् । चञ्चलो भवति । वा । हृतो भवति ॥ अत्र स्वरादल्लोप (सू० ३९) इत्यकारलोपः ॥

## ॥ हेर्बन्धने ऽपि ॥ ५६ ॥

हि ग्रहणादिषु इत्यस्य कर्मकर्ता व्यवहारबन्धे भवति अपिशब्दात्स्वार्थे ऽपि ॥ ह्यन यिवान् छुह् । बद्धो भवति । क्रीतश्च भवति ॥ धातोरकारागमे (८।२।११ सूत्रेण) कृते । अकारादकारलोपः (सू० ३९) ॥

## ॥ भावशब्देभ्यो हेर्भूतप्रयोगा वर्तमानबोधकाः ॥ ५७ ॥

भावशब्देभ्यः पूर्वे परे वा हि ग्रहणे इत्यस्य धातोर्भूतप्रयोगा वर्तमानकालस्य बोधका भवन्ति ॥ करुन् ह्यतुन् । कर्तुं प्रवृत्तः ॥ ह्यतुख् परुन् । पठितुं प्रवृत्ताः ॥ संप्रतिकाले करोति पठन्ति चेत्यर्थतोऽवगम्यते ॥

## ॥ ज़ानो भविष्यन्त्याश्च ॥ ५८ ॥

ज़ान अवबोधने इत्यस्य धातोर्भविष्यन्तीप्रयोगा भावशब्देभ्यः पूर्वे वा परे प्रयुक्ता वर्तमानकालबोधका भवन्ति । चशब्दात्केवलाः प्रयोगाश्चेति ॥ करुन् ज़ानि । करणं जानाति ॥ परुन् ज़ानि । पठनं जानाति ॥ लेखुन् ज़ानन् । लेखनं जानन्ति ॥ ज़ेनुन् ज़ानन् । अर्जनं जानन्ति ॥ चशब्दादन्यतोऽपि च । स्यठाह् ज़ानि । बहु जानाति ॥ विद्या ज़ानि । विद्यां जानाति ॥ इत्थमेवातीतप्रयोगा भविष्यदर्थे क्वचिद्व्यवह्रियन्ते । यथा । तमिस् ल्यूखुथ् सोनु नमस्कार् । तस्मै नो नमस्कारो लेख्यः ॥ अत्र ल्यूखुथ् इति भूतकालप्रयोगो भविष्यदर्थे ॥

## ॥ पाथो नित्यम् ॥ ५९ ॥

पाथ सद्भावे इत्यस्य भविष्यन्तीप्रयोगा नित्यं वर्तमानार्थे भवन्ति तस्य वर्तमानप्रयोगदर्शनाभावात् ॥ पाथि । सन्नस्ति ॥ पाथन् । सन्तः सन्ति ॥ पाथख् सन्नसि ॥ पाथिव् । सन्तः स्थ ॥ पाथ । सन्नस्मि ॥ पाथव् । सन्तः स्मः ॥ किं चास्य धातोरतीतप्रयोगादर्शनाच्चापूर्णभूतप्रयोगा अतीते भवन्ति ॥ पाथिह [। आसीत् ] ॥ पाथहान् [ । आसन् ] ॥ पाथहाख् [ । आसीः ] ॥ पाथिहीव् [। आस्त ] ॥ इत्यादि । तथा पाथिहेहय् । इत्यादयश्च साधवो भवन्ति । तथा चास्य धातोः कृदन्तस्वरूपाणि च न सेत्स्यन्तीति बोध्यम् ॥

इति शारदाक्षेत्रभाषाव्याकरणे कश्मीरशब्दामृते आख्यातप्रक्रियायां वर्तमानपादः प्रथमः ॥८।१॥

# अथाख्यातप्रक्रियायाम् ॥ ८ ॥

## भविष्यत्पादः ॥ २ ॥

### ॥ अनारब्धा क्रिया भविष्यत्कालः ॥ १ ॥

वर्तमानासन्नोत्तरकालादुत्तरः सर्वः कालः भविष्यत्कालसंज्ञो भवति। तत्कालस्य सर्वाः क्रिया अनारब्धा एव भवन्ति ॥

### ॥ विध्याशीर्भविष्यन्त्यपूर्णभूतार्थभेदाच्चतुर्विधः ॥ २ ॥

स भविष्यत्कालो विधिः, आशीः, भविष्यन्ती, अपूर्णभूतार्था नाम क्रियातिपत्तिः, इति भेदतश्चतुष्प्रकारो भवति। क्रियातिपत्तेरत्रापूर्णभूतार्थकथनादतीतकाले ऽपि भवति ॥

### ॥ आसन्नदूराभ्यां विधिर्द्विविधः ॥ ३ ॥

वर्तमानकालान्निकटकाल आसन्नविधिः दूरकालो दूरविधिरिति द्विविधो भवति। तत्र वक्तुरुत्तमपुरुषस्य स्वस्मिन्विधिनिषेधाभावाच्चत्वार एव प्रथमपुरुषैकत्वानेकत्वमध्यमैकत्वानेकत्वप्रत्ययाः प्रयुज्यन्ते ॥

## ॥ मुख्यगौणाभ्यां निकटविधिर्द्विधा ॥ ४ ॥

अवश्यं करणीयाज्ञा मुख्यनिकटविधिः तदितरो गौणनिकटविधिरिति द्विप्रकारो भवति ॥

## ॥ निकटविधौ इन् इन् हि इव् प्रत्ययाः ॥ ५ ॥

स्पष्टम् ॥ करिन् । करोतु ॥ करिन् तिम् । कुर्वन्तु ॥ कर् । कुरु ॥ करिव् । कुरुत ॥ हि प्रत्ययस्य इकार उच्चारणार्थः । व्यञ्जनान्ताद्धलोप (सू० ६) इति इकारस्य लोपः ॥

## ॥ व्यञ्जनान्ताद्धलोपः ॥ ६ ॥

व्यञ्जनान्ताद्धातोर्हिप्रत्ययइकारस्य लोपो भवति ॥ कर् । कुरु ॥ कर करणे मध्यमैकत्वे हि इकार उच्चारणार्थः अनेन इकारलोपः । व्यञ्जनान्तात्किम् । दिह् । देहि ॥ निह् । हर ॥ दि दाने । नि हरणे । हि प्रत्ययः । इकार उच्चारणार्थः ॥

## ॥ ओदेदुपधाया ऊदीतौ ॥ ७ ॥

धातोरुपधाभूतस्य ओकारस्य एकारस्य च क्रमेण ऊकारईकारौ भवतः ॥ रूज़िन् । तिष्ठतु ॥ तूलिन् । तोलयतु ॥ पूठिन् । पुष्यताम् ॥ रोज़ स्थितौ । तोल तुलने । पोठ स्थूलीभवने । अनेन उपधाया ओकारस्य ऊकारः । नीरिन् । निर्गच्छतु ॥ शींकिव् । शङ्कन्ताम् ॥ पीडिन् । निष्पीड्यताम् ॥ नेर निर्गमने । शैंक शङ्कायाम् । पेड निर्यासे । अनेन उपधाया एकारस्य ईकारः ॥

## ॥ न हौ ॥ ८ ॥

हि प्रत्यये परे उपधाया ओदेतोरुकारेकारौ न भवतः ॥ रोज् । तिष्ठ ॥ तोल् । तोलय ॥ नेट् । निर्गच्छ ॥ शैंक् । शङ्कस्व ॥ साधनं सुगमम् ॥

## ॥ चुरादीनामिन्प्रत्ययसंबन्धप्रत्ययैर्विधिः ॥ ९ ॥

चुर अन्तःकोपे इत्यादीनां धातूनां प्रथमपुरुषस्य इन् प्रत्ययेन तत्छब्दादिसंबन्धे विधीयमाने सति सर्वप्रत्ययानां बोधो भवति स एवात्र विधिः ॥ चुरिनस् । चुरिनख् । चुरिनय् । चुरिनव ॥ एवं शेषाणामपि ज्ञेयम् ॥

## ॥ स्वरान्ताद्यागम इकारे ॥ १० ॥

स्वरान्ताद्धातोरिकारे परे यकारागमो भवति ॥ दियिव् । दत्त ॥ नियिव् । हरत ॥ दि दाने । नि हरणे । मध्यमानेकत्वे इव् प्रत्ययः अनेन यकारागमः ॥

## ॥ सर्वत्राकारागमो निदियिवर्जितात् ॥ ११ ॥

स्वरान्ताद्धातोः सर्वत्र सर्वासु विभक्तिषु अकारागमो भवति । निहरणे । दि दाने । यि आगमने । एतान्वर्जयित्वा ॥ ह्यह् । क्रीणीहि ॥ ख्यह् । खाद ॥ च्यह् । पिव ॥ हि क्रीणनग्रहणधारणेषु । खि खादने । चि पाने । मध्यमैकत्वे हि प्रत्ययः अनेनाकारागमः । इकारोऽसवर्णे यो ऽपरलोप (सू० ११२०) इति यत्वम् । व्यञ्जनं परेण संधेयम् ( सू० ११३ ) । निदियिवर्जितात्किम् । निह् । हर ॥ दिह् । देहि ॥ यिह् । एहि ॥ साधितचरा एव ॥

## ॥ येर्व्वलादेशो वा ॥ १२ ॥

यि आगमने इत्यस्य विधौ विषये व्वल आदेशो वा भवति ॥ व्वलिन् । आयातु ॥ व्वल । एहि ॥ व्वलिव् । एत ॥ साधनं पूर्ववत् ॥

## ॥ व्वव इनि यो वा ॥ १३ ॥

व्वव उत्पत्तौ इत्यस्य इन्प्रत्यये परे वकारस्य यकारो वा भवति ॥ व्वयिन् । भवतु ॥ पक्षे । व्वविन् ॥ एवमाशीर्यन्प्रत्यये ऽपि ज्ञेयः ॥

## ॥ गौणे प्रत्ययस्वरात्तः ॥ १४ ॥

गौणविधिरपि द्विविध एक उपेक्ष्याज्ञापनं द्वितीय आक्षेपतः कथनम् । तयोर्द्वयोरेव विध्योः प्रत्ययस्वरात्परस्तकारागमो भवति ॥ क॑रितन् । करोतु नाम ॥ क॑रितन् । कुर्वन्तु नाम ॥ क॑रितव् । कुरुत नाम ॥ कर करणे निकट विधौ इन् इन् हि इव् प्रत्ययाः (सू० ९) । अनेन इकारात्परस्तकारः धातुस्वरस्य चाप्रसिद्धता विज्ञेया ॥ खा॑रितन् । आरोहयतु नाम ॥ वा॑लितन् । अवरोहयतु नाम । साधनं सुगमम् ॥

## ॥ हौ धातोरेव ॥ १५ ॥

हि प्रत्यये परे धातोरेव तकारागमो भवति ॥ कर्त । कुरु नाम ॥ दित । देहि नाम ॥ कर करणे । द्विदाने । हि प्रत्ययः व्यञ्जनान्ताद्धलोपः (सू० ९) । प्रत्ययलक्षणाद् [ पा० १।१।६२। ] अनेन कर् दि इत्याभ्यां परस्तकारागमः ॥ कर्तन् । तं कुरु ॥ क॑रितोन् । तं कुरुत ॥

## ॥ व्यञ्जनान्तात्संबन्धप्रत्ययादेरुकारः ॥ १६ ॥

व्यञ्जनान्तं धातुस्वरूपं मध्यमैकत्व एव भवति तस्मात्तच्छब्दादिसंबन्धप्रत्यय-

संबन्धिन आदिस्वरस्य उकारो भवति ॥ करुस् । तस्मै कुरु ॥ करुख् । तेभ्यः कुरु ॥ करुम् । मे कुरु ॥ व्यञ्जनान्तात्किम् । दिस् । तस्मै देहि ॥ निस् । तस्माद्धर ॥ दि दाने । नि हरणे । हि प्रत्ययः । इकार उच्चारणार्थः । ततः दिह् स्वरूपात् अस् प्रत्ययः । प्रत्ययेषु हलोपः सर्वत्र ( सू० ४।१३१ ) इति हलोपः । स्वरादल्लोप (सू० ८।१।३९) इति अकारलोपः । एवं । कर्तस् । तस्मै कुरु ॥ पर्तस् । तस्मै पठ ॥ अत्र तकारागमात्स्वरान्तत्वे सिद्धे प्रोक्तसूत्रावाप्तिर्न भवति ॥

## ॥ वकारात्सपूर्व ऊकारः ॥ १७ ॥

वकारात्परः संबन्धप्रत्ययादिस्वरः पूर्ववर्णेन सह ऊकारो भवति ॥ कर्यूस् । कुरुत तस्मै ॥ दिय्यूस् । तस्मै दत्त ॥ करिव् दियिव् इति स्वरूपाभ्यामस् प्रत्ययः अनेन वकारेण सह अकारस्य ऊकारः यत्वम् ॥

## ॥ तकाराद्ोकारः ॥ १८ ॥

तकारात्परयोस्तयोर्वकारअकारयोरोकारो भवति ॥ कंरितोन् । तं कुरुत नाम ॥ कंरितोस् । तस्य कुरुत नाम ॥ कंरितोख् । तेषां कुरुत नाम ॥ कंरितोम् । मे कुरुत नाम ॥ साधनं पूर्ववत् ॥

## ॥ मो निषेधार्थो ऽत्रैव ॥ १९ ॥

निषेधार्थको मकारः अत्रैव विभक्तिविशेषे क्रियायाः पूर्वे वा परे प्रयोज्यो नान्यत्र ॥ शेषे विभक्तिसमुदाये माशब्द आशङ्कार्थो भवति विध्याशिषोरेव निषेधार्थको भवतीति ज्ञेयम् ॥ म करिन् । मा करातु ॥ म करु । मा कुरु ॥ म करिव् । मा कुरुत । साधनं सुगमम् ॥ अत्रैव किम् । करान् छुन । न करोति ॥ कंरुन् न । नाकरोत् ॥ कंरिज़ि न । न कुर्याद् ॥ कंरिज़्यन् न । तं न कुर्यात् ॥ करि न । न करिष्यति ॥

## ॥ संबुद्धिगौणप्रत्यया मात्परा अपि ॥२०॥

लिङ्गप्रकरणोक्तोत्तमादिसंबोधनप्रत्यया गौणविधिप्रत्ययाश्च मकारात्पराः प्रयोज्याः । अपिशब्दात् गौणप्रत्ययः पूर्ववदप्यत्रापि प्रयोज्यः । अत एव निर्देशान्नकारात्परा अपि प्रयोज्याः ॥ मा कर् । मा कुरु ॥ मवा कर् । मा कुरु ॥ मसा कर् । मा कुरु ॥ एवं स्त्रीसंबोधनप्रत्ययाश्च ॥ मत कॅरितन् । मा करोतु नाम ॥ मत कर्त । मा कुरु नाम ॥ मत कॅरितव् । मा कुरुत नाम ॥ मत बा कर्त । मा कुरु नाम ॥ मतसा कर्त । मा कुरु नाम ॥ मता कर्त । मा कुरु नाम । इत्यादयः ॥

## ॥ विधितदतिपत्तिभेदाद्दूरविधिर्द्विविधः ॥ २१ ॥

एक आगामिकाले कर्मप्रेरणम् अपरस्तस्य कर्मणः अनिष्पत्तिकथनमिति दूरविधिर्द्विधा भवति ॥

## ॥ दूरविधौ ज़िप्रत्ययः सर्वेषु ॥ २२ ॥

सर्वेषु वचनेषु ज़ि प्रत्यय एक एव ज्ञेयः स च तच्छब्दादिकर्तृप्रयोगेण भिद्यते ॥

## ॥ तदतिपत्तौ हेपरः ॥ २३ ॥

हेशब्दः परो यस्मादेवंविधो ज़ि प्रत्ययस्तदतिपत्तौ प्रत्ययो भवेत् । ज़रादीनां तु युष्मदि हेपर इति किंचाक्षेपादतीतकालो ऽपि भवतीति बोध्यम् ॥

## ॥ व्यञ्जनान्तादिचागमो ज़ौ ॥ २४ ॥

व्यञ्जनान्ताद्धातोर्ज़ि प्रत्यये परे इच् आगमो भवति चकार उच्चारणार्थः ॥ कॅरिज़ि । कुर्यात् ॥ कर करणे दूरविधौ ज़ि प्रत्ययः (सू० २२) । अनेन इच्

चकारलोपः अयमेव प्रयोगः सर्वेषु वचनेषु विज्ञेयः॥ सुह् क्रिज़ि। सः कुर्यात्॥ तिम् क्रिज़ि। ते कुर्युः॥ च्रह् क्रिज़ि। त्वं कुर्याः॥ त्वंहि क्रिज़ि। यूयं कुर्यात॥ व्यञ्जनान्तात्किम्। दिज़ि। दद्यात्॥ ख्यज़ि। खादेत्॥ तदतिपत्तिप्रयोगाश्च यथा। क्रिज़िहे॥ कुर्वीत नाम॥

## ॥ नासमोर्लोपो ज़ेः ॥ २५ ॥

अस् अम् इत्येतयोः प्रत्यययोः स्वरादल्लोप (सू० ८।१।३९) इति प्राप्तो लोपो ज़िप्रत्ययात् न भवति॥ क्रिज़्यम्। मे कुर्याः॥ क्रिज़्यस्। तस्य कुर्याः॥ असमोः किम्। क्रिज़िय्। ते कुर्यात्॥ ज़ेः किम्। क्रिज़िहेस्। तस्य कुर्वीत नाम॥ अत्र अस् प्रत्ययस्य स्वरादल्लोप (सू० ८।१।३९) इत्यकारलोपः॥

## ॥ आशिषि यन् यन् यख् ह्व् प्रत्ययाः ॥२६॥

स्पष्टम्। तत्रास्या विभक्तेर्लोके ऽत्यल्पप्रसिद्धतया तत्स्वरूपसाधनसूत्राणि नाभिहितानि। परंतु पूर्णभूते ये ये आदेशा वक्ष्यन्ते ते ऽत्रापि धीमद्भिरवधार्याः। येषां च धातूनां क्रिया लोके प्रचारितास्ति ते उदाहृतिद्वारा व्यक्तीक्रियन्ते॥ कर्यन्। क्रियात्॥ लश्यन्। जीव्यात्॥ रङ्यन्। पच्यात्॥ ज़ेङ्यन्। जीयात्॥ आश्यन्। भूयात्॥ अत्रैव सकारान्तस्य शकारो दृश्यते॥ नान्तानां तु पूर्णभूतप्रक्रियया (८।३।७३। सूत्रेण) नकारस्य ञकारः॥ लश्यनय्। ते जीव्यात्॥ पोष्यनय्। ते पर्याप्यात्॥ लस सम्यग्जीवने। पोष पर्याप्ततायाम् शेषं पूर्ववत्॥ एवं। ब्वय्यन्। भूयात्॥ म ब्वय्यन्। मा भूयात्॥

## ॥ छावो यखि यो वा ॥ २७ ॥

छाव उपभोगे। इत्यस्य यख् प्रत्यये परे वकारस्य यकारो भवति वा विकल्पेन॥ छाय्यख्। निर्विश्याः॥ पक्षे। छाव्यख्। निर्विश्याः॥

## ॥ भविष्यन्ती इ अन् अख् इव् अ अव् प्रत्ययाः ॥ २८ ॥

सुगमम् ॥ करि । करिष्यति ॥ करन् । करिष्यन्ति ॥ करख् । करिष्यसि ॥ करिव् । करिष्यथ ॥ कर । करिष्यामि ॥ करव् । करिष्यामः ॥

## ॥ स्वरान्तानामुत्तमे मागमः ॥ २९ ॥

स्वरान्तानां धातूनामुत्तमपुरुषे मकारागमो भवति ॥ दिम । दास्यामि ॥ दिमव् । दास्यामः ॥ दि दाने उत्तमपुरुषैकत्वानेकत्वयोः अ अव् प्रत्ययौ अनेन मागमः ॥ उत्तमे किम् । दियि । दास्यति ॥ दिन् । दास्यन्ति ॥ दिख् । दास्यसि ॥ दियिव् । दास्यथ ॥ दि दाने । इ अन् अख् इव् प्रत्ययाः । स्वरान्ताद्यागम इकारे ( सू० १० ) इत्यनेन इकारागमः । अपरत्र स्वरादल्लोपः (सू० ८।१।३९) इत्यकारलोपः ॥ तच्छब्दादिसंबन्धप्रयोगाश्च यथा ॥ कर्यस् । तस्य करिष्यति [ । अस्यां विभक्तौ प्रथमपुरुषकर्तृसंबन्धार्थे स्वरादल्लोप-(सू० ८।१।३९) कार्यमनित्यं ज्ञेयम् ] ॥ करनस् । करिष्यन्ति तस्य ॥ करहन् । करिष्यसि तम् ॥ करहस् । करिष्यसि तस्य ॥ कर्यूस् । करिष्यथ तस्य ॥ करस् । करिष्यामि तस्य ॥ करन् । करिष्यामि तम् ॥ करोस् । करिष्यामस्तस्य ॥ करोन् । करिष्यामस्तम् । पूर्वं साधितानि ॥ च़रादीनां तु विधिवदत्रापि विधिर्ज्ञेयः ॥

## ॥ अपराः प्रत्ययाः संप्रश्ने ॥ ३० ॥

ते भविष्यन्तीप्रत्यया अपरा अकारः परो येभ्यस्तथा संप्रश्ने प्रत्ययाः स्युः ॥

## ॥ प्रथमोत्तमैकत्वे दीर्घः ॥ ३१ ॥

तस्य अकारस्य प्रथमैकवचने उत्तमैकवचने च दीर्घो भवति ॥ ते प्रत्ययाश्च यथा । या अन अख इव आ अव भवन्ति । उदाहरणानि । कर्या । किं कुर्यात् ॥ करन । किं कुर्युः ॥ करख । किं कुर्याः ॥ करिव । किं कुर्यात ॥ करा । किं कुर्याम् ॥ करव । किं कुर्याम ॥ साधितचराण्येव ॥

## ॥ क्रियातिपत्तिः इहे अहान् अहाख् इहीव् अहा अहाव् प्रत्ययाः ॥ ३२ ॥

स्पष्टम् ॥ करिहे । अकरिष्यत् ॥ करहान् । अकरिष्यन् ॥ करहाख् । अकरिष्यः ॥ करिहीव् । अकरिष्यत ॥ करहा । अकरिष्यम् ॥ करहाव् । अकरिष्याम ॥ स्वरान्तधातूनां यथा ॥ च्ययिहे । अपास्यत् ॥ च्यहान् । अपास्यन् ॥ च्यहाख् । अपास्यः ॥ च्ययिहीव् । अपास्यत ॥ च्यमहा । अपास्यम् ॥ च्यमहाव् । अपास्याम ॥ चि पाने स्वरान्ताद्यागम इकारे (सू० १०) इति यकारागमः । सर्वत्राकारागमो निदिायिवर्जितात् ( सू० ११ ) इति धातोरकारागमः । स्वरादल्लोप ( सू० ८।१।३९ ) इत्यकारस्य लोपः । स्वरान्तानामुत्तमे मागम (सू० २९) इति मकारागमः । सर्वत्र यत्वम् ॥

## ॥ कौतुके सर्वे प्रत्यया हय्पराः ॥ ३३ ॥

कौतुकेन क्रियातिपत्तावभिहितायां सत्यां सर्वे प्रोक्तप्रत्ययास्तच्छब्दादिसंबन्धप्रत्ययाश्च हय्परा हय्शब्दः परो येभ्यस्तथा प्रयोज्याः ॥ करिहे हय् ।

---

[ ३२ । अहान् अहाख् अहा अहाव् इत्येषु प्रत्ययेषु हा इत्याश्रित आकारो ऽप्रसिद्ध उच्चार्यते । ]

चेदकरिष्यत् ॥ करहान् हय् । चेदकरिष्यन् ॥ करिहेस् हय् । चेत्तस्याकरिष्यत् ॥ करहानस् हय् । चेत्तस्याकरिष्यन् ॥

## ॥ आक्षेपे ऽपि नयूपराः ॥ ३४ ॥

आक्षेपेण क्रियातिपत्तावभिहितायां सत्यां ते प्रत्यया नयूपरा भवन्ति । अपिशब्दाद्धेतुमद्भावे ऽपि ॥ करिहे नय् । चेन्नाकरिष्यत् । वा । खलु नाकरिष्यत् ॥ करहान् नय् । चेन्नाकरिष्यन् ॥

## ॥ कर्तुः परौ वा ॥ ३५ ॥

स हय् प्रत्ययः नय् प्रत्ययश्च कर्तुः परौ वा भवतः ॥ सुहय् करिहे । स चेदकरिष्यत् ॥ तिम् हय् करहान् । ते चेदकरिष्यन् ॥ सुनय् करिहे । स चेन्न कुर्यात् ॥ तिम् नय् करहान् । ते चेन्न कुर्युः ॥ सुय् करिहे । इति निश्चयप्रत्ययेन स्वरूपं विवेच्यम् ॥ अत्र प्रत्ययेषु हलोपः सर्वत्र (सू० ४।१३१) इति सुह् शब्द-हकारस्य लोपः । शेषं साधनं पूर्ववत् । ज्ञरादीनां तु प्रोक्तवद्बोध्यम् ॥

इति शारदाक्षेत्रभाषाव्याकरणे कश्मीरशब्दामृते आख्यात-
प्रक्रियायां भविष्यत्पादो द्वितीयः ॥८।२॥

# ॥ अथाख्यातप्रक्रियायाम् ॥ ८ ॥

## ॥ भूतपादः ॥ ३ ॥

### ॥ समापितक्रियाकालो भूतकालः ॥ १ ॥

स्पष्टम् ॥

### ॥ भूतसामान्यपूर्णापूर्णभेदाच्चतुर्विधः ॥ २ ॥

सो ऽतीतकालः भूतसामान्यभूतपूर्णभूतअपूर्णभूतभेदैश्चतुष्प्रकारो विज्ञेयः ॥

### ॥ भावकर्मिणां भूते उन् उख् उथ् उव उम् उ प्रत्ययाः ॥ ३ ॥

भावधातूनां येषां धातुपाठे अतीतप्रयोगा भावे पठिताः। भावप्रयोगस्तु यत्र तृतीया कर्तृस्थाने स्यात्। कर्मिणां धातूनां च येषां धातुपाठे अतीतकालप्रयोगाः कर्मणि अभिहिताः। कर्मप्रयोगस्तु यत्र तृतीया कर्तृस्थाने प्रथमा कर्मस्थाने स्यात्। तेषामुभयेषां धातूनां भूते उन् आदिप्रत्यया बोध्याः। अत्र शब्दशास्त्रे भावकर्मिणां धातूनामतीतकाले कर्तृप्रयोगाभावः। अकर्मकाणां तु कर्मप्रत्ययाभावः। कर्तृप्रयोगस्तु यत्र प्रथमा कर्तृस्थाने स्यादिति ॥ भावे यथा।

अंसुन् । अहस्यत ॥ नंचुन् । अनृत्यत ॥ व्रंसुन् । व्यहस्यत ॥ अस हसने । नच्च नर्तने । व्रस अतिहासे । अनेन उन् ॥ कर्मणि यथा । कंरुन् । तेन तया वा कृतम् ॥ कंरुख् । तैस्ताभिर्वा कृतम् ॥ कंरुथ् । त्वया कृतम् ॥ कंरुव । युष्माभिः कृतम् ॥ कंरुम् । मया कृतम् ॥ कंरु । अस्माभिः कृतम् ॥ कर करणे अनेन उन् आदिप्रत्ययाः ॥

## ॥ कर्मणि पुंबहुत्वे इदाद्यस्वरस्य ॥ ४ ॥

कर्मिणां धातूनां पुंलिङ्गस्य बहुवचने कर्मणि सति सर्वेषां प्रत्ययानामादिस्वरस्य इकारो भवति ॥ लीखिन् । तेन अलिख्यन्त ॥ लीखिख् । तैर्लिखिताः पुं० ॥ लीखिथ् । त्वया लिखिताः पुं० ॥ लीखिव । युष्माभिर्लिखिताः ॥ लीखिम् । मया लिखिताः पुं० ॥ लीखि । अस्माभिर्लिखिताः ॥ लेख लेखने भावकर्मिणां भूत (सू० ३) इति उन् आदिप्रत्ययाः । अनेनादिस्वरस्य इकारः । पुंस्येकारस्य यूदीतौ (सू० २१) इत्यनेन सूत्रेण एकारस्य ईकारः ॥

## ॥ स्त्रियां यत् ॥ ५ ॥

सकर्मकाणां धातूनां स्त्रीलिङ्गस्य बहुत्वे कर्मणि सति प्रत्ययादिस्वरस्य यकारो भवति ॥ कर्यन् । तेन ताः कृताः ॥ कर्यख् । तैस्ताः कृताः ॥ लेछ्यन् । तेन ता लिखिताः ॥ रछ्यन् । तेन ता रक्षिताः ॥ कर करणे । लेख लेखने । रछ रक्षायाम् । उन् उख् प्रत्ययौ । अनेन उकारस्य यत्वम् । स्त्रियामीदेतौ सर्वत्र (सू० २३) इति उपधाया एकारः । कवर्गस्यैकत्वे ऽपि (सू० ७१) इत्यनेन लेखः खकारस्य छकारः ॥

## ॥ इकारान्तादेकत्वे ऽपि ॥ ६ ॥

इकारान्ताद्धातोरेकत्वे कर्मणि च प्रत्ययादिस्वरस्य यकारो भवति ॥

ख्ययन् ॥ तेन सा भुक्ता ॥ च्ययन् । तेन सा पीता ॥ नियन् । तेन सा नीता ॥ खि खादने । चि पाने । नि हरणे । उन् प्रत्ययः अनेनोकारस्य यत्वम् । सर्वत्राकारागमो निदियिवर्जितात् (सू० ८।२।११) इति सूत्रेण प्रथमयोः अकारागमः ॥

## ॥ ह्दियोरत् ॥ ७ ॥

ह्रि ग्रहणक्रीणनधारणेषु । दि दाने । इत्यनयोः स्त्रीबहुत्वे कर्मणि सति आदिस्वरस्य अकारो भवति । चानुकृष्टं नानुवर्तत इति एकत्वे कर्मणि न ज्ञेयः ॥ ह्यन्नन् । तेन ता धृताः ॥ दिन्नन् । तेन ता दत्ताः ॥ उन् प्रत्ययः प्रथमस्य सर्वत्राकारागमो निदियिवर्जितात् (सू० ८।२।११) इत्यकारागमः । ह्दियोस्तकारागम (सू० ३२) इति तकारागमः । अनेन प्रत्ययादिस्वरस्य अकारः । तवर्गस्याप्रसिद्ध ( सू० ७२ ) इत्यप्रसिद्धन्नकारादेशः । ह्दियोः किम् । ख्ययन् । सा भुक्ता ॥ च्ययन् । सा पीता । नियन् । सा नीता ॥ पूर्वं साधितान्येव ॥

## ॥ एकत्वे ऊमात्रादेशः ॥ ८ ॥

सकर्मकाणां धातूनां स्त्रीलिङ्गस्यैकत्वे कर्मणि सति प्रत्ययादिस्वरस्य ऊमात्रादेशो भवति ऊमात्रान्तत्वे सिद्धे पूर्वोक्तलिङ्गप्रकरणपरिभाषया * पूर्ववर्णस्वरस्याप्रसिद्धतावधार्या ॥ कारून् । सा कृता ॥ मारूथ् । त्वया सा हता ॥ खारूम् । मया सारोहिता ॥ कर करणे । मार मारणे । खार आरोहणे । उन् उथ् उम् प्रत्ययाः । अनेनादिस्वरस्य ऊमात्रादेशः ॥

## ॥ चुवमोरवयोर्नित्यम् ॥ ९ ॥

चुव कलहे । मोरव पीडासहने । इत्यनयोरेकत्वे कर्मणि नित्यं प्रत्ययादिस्वरस्य-

[ * ऊदन्तत्वे सिद्धे पूर्वस्वरस्याख्याततता ज्ञेयेति २।१।७ सूत्रे द्रष्टव्यम् । ]

ऊमात्रादेशः स्यात् । तयोः पुंलिङ्गकर्माभावत्वान्नित्यपदग्रहणम् ॥ चुवुन् । तेन युद्धम् ॥ मोरवुन् । सोढा ॥ एकत्वे किम् । चुव्यन् । युद्धाः ॥ मोरव्यन् । सोढाः ॥ भावकर्मिणाम् ( सू० ३ ) इति उन् । स्त्रियां यत् ( सू० ९ ) इति उकारस्य यकारः ॥

## ॥ पुंकर्तृप्रत्ययोकारस्य स्त्रियां च ॥ १० ॥

पुंलिङ्गस्य यः कर्तृप्रत्ययसंबन्धी उकारस्तस्य स्त्रीलिङ्गविषये ऊमात्रादेशः स्यात् ॥ वोतु । प्राप्तः ॥ वाचू । प्राप्ता ॥

## ॥ इकारस्य यत् ॥ ११ ॥

पुंलिङ्गस्य यः कर्तृसंबन्धी इकारस्तस्य यकारो भवति स्त्रीलिङ्गविषये ॥ थक्रि । श्रान्तास्ते ॥ थच्य । श्रान्तास्ताः ॥

## ॥ अप्रसिद्धचवर्गादकारः ॥ १२ ॥

अप्रसिद्धचवर्गात्परस्य स्त्रीलिङ्गकर्तृसंबन्धिनो यकारस्य अकारो भवति ॥ वाच्च । प्राप्तास्ताः ॥ खछ़ * । आरूढास्ताः ॥ दज़ । दग्धास्ताः ॥

## ॥ सकाराच्च ॥ १३ ॥

सकारात्परस्य प्रत्ययकारस्य अकारो भवति ॥ आस । आसन् ताः ॥ वस । निवसितास्ताः ॥ छोस । श्रान्तास्ताः ॥ पक्षे । छोछ़ ॥

---

[ * खछ़ इति छकारस्थाने खच़ इति चकारेणोच्चार्यते । ]

## ॥ सामान्यभूते ओन् ओख् ओथ् ओव ओम् ओव् प्रत्ययाः पुंसि ॥ १४ ॥

भावकर्मिणां धातूनां सामान्यभूते ओन् आदिप्रत्ययाः पुंलिङ्गैकत्वे कर्मणि बोध्याः ॥ कर्योन् । तेनाकारि ॥ कर्योख् । तैरकारि ॥ कर्योथ् । त्वयाकारि ॥ कर्योव । युष्माभिरकारि ॥ कर्योम् । मयाकारि ॥ कर्योव् । अस्माभिरकारि ॥ कर करणे सामान्यभूते ओन् आदिप्रत्ययाः । यागमः सर्वेषु सामान्यपूर्णेषु च ( सू० ४६ ) इति यकारागमः ॥

## ॥ बहुत्वे एकारः ॥ १५ ॥

पुंलिङ्गस्य बहुत्वे कर्मणि सति प्रत्ययादिस्वरस्य एकारो भवति ॥ कर्येन् । तेनाकृषत ॥ कर्येख् । तैरकृषत ॥ कर्येथ् । त्वयाकृषत ॥ कर्येव । युष्माभिरकृषत ॥ कर्येम् । मयाकृषत ॥ कर्येय् । अस्माभिरकृषत ॥ साधनं पूर्ववत् । अनेन प्रत्ययौकारस्य एकारः ॥

## ॥ स्त्रियामेयादेशः सर्वत्र ॥ १६ ॥

सर्वत्र सामान्यपूर्णभूते एकत्वबहुत्वयोः कर्मणि च प्रत्ययादिस्वरस्य एय आदेशो भवति स्त्रीलिङ्गे एव ॥ कर्येयन् । तेन साकारि ॥ कर्येयन् । तेन ता अकृषत ॥ कर्येयख् । तैः साकारि ॥ कर्येयख् । तैस्ता अकृषत ॥ कर करणे । ओन् ओख् प्रत्ययौ । अनेन ओकारस्य एयादेशः । यागमः सर्वेषु सामान्यपूर्णेषु च (सू० ४६) इति यागमः ॥

## ॥ अप्रसिद्धचवर्गादाय ः ॥ १७ ॥

स्त्रीलिङ्गस्य सर्वत्र सामान्यपूर्णभूते एकत्वबहुत्वयोः कर्मणि च अप्रसिद्ध-

च्नवर्गात्परस्य प्रत्ययादिस्वरस्य आय आदेशो भवति ॥ ब्रच्नायन् । सा प्रत्यग्राहि तेन ॥ दिच्नायन् । सा तेनादायि ॥ हिद्योस्तकारागमः (सू० ३२) इरकारागमः (८।२।११ सूत्रेण) तवर्गस्याप्रसिद्ध (सू० ७२) इति च्नत्वम् । अनेन आयादेशः । मर्च्नायस् । अस्य नित्यं संबन्धप्रत्ययत्वात् तस्यैवादिस्वरस्य आयादेशः ॥ तत्रा-लुप्तयकारेभ्यः कर्तृधातुभ्य (४९ सूत्रस्थेभ्यः) आयादेशो विकल्पेन विज्ञातव्यः ॥ श्रोच्नाय । वा । श्रोच्नेय । शुद्धीबभूव सा ॥ तेज़ाय । वा । तेज़ेय । तीक्ष्णीब-भूव सा ॥ वावज़ाय । वा । वावज़ेय [ । रुरुचे सा ] । इत्यादि ॥ खोच्नाय । बिभाय सा ॥ पच्नाय । प्रतीयाय ॥ रोच्नाय । रुरुचे सा ॥ वुछाय । उत्तस्थौ सा ॥ वछाय । अवरुरोह सा ॥ खछाय । आरुरोह सा ॥ दज़ाय । देहे सा ॥ रोज़ाय । तस्थौ सा ॥ बुज़ायन् । बभ्रज्ज ताम् ॥ खोच्न भये । पच्न ऋणादि-विश्वासे । रोच्न रोचने । वुथ उत्थाने । वस अवरोहणे । खस आरोहे । दज़ भस्मीभवने । रोज़ स्थितौ । बुज़ भर्जने । श्रोवावादयः सामान्यपूर्णयोः ( सू० ७८ ) इत्युक्त्या स्त्रियाम् एय प्रत्ययः । तस्य एकारस्य अनेन आया-देशः । खस वसोस्थः सर्वत्र ( सू० ६६ ) इति सकारस्य थकारः । तवर्गस्या-प्रसिद्ध (सू० ७२) इति थकारस्य छकारः । बुज भर्जने इत्यस्य उन् प्रत्ययः । शेषं पूर्ववत् ॥

## ॥ एयश्च पुंसि ॥ १८ ॥

अप्रसिद्धच्नवर्गात्परस्य एय् प्रत्ययस्य पुंलिङ्गविषये आय आदेशो भवति । यकारो ऽस्वरः ॥ लाछाय् । जिजीवुः ॥ खछाय् । आरुरुहुः ॥ लस सम्यग्जी-वने । खस आरोहे । पुंकर्तरि ( सू० ३९ ) इति एय् प्रत्ययः । लसश्च (सू० २९, ३३, ६७, ७२) इति । खसवसोस्थ (६६) इति सकारस्य थकारे कृते अनेन एय प्रत्ययस्य आय् आदेशः । एयः किम् । लांछाय् । जिजीवुः ॥ साम-न्यपूर्णयोः आय् (सू० ४०) । शेषमुक्तवत् ॥

## ॥ इदुदूद्युतानां पूर्ववर्णस्वराप्रसिद्धता ॥ १९ ॥

इकारतन्मात्रायुतानामुकारतन्मात्रायुतानामूकारतन्मात्रायुतानां च वर्णानां तत्पूर्ववर्णसंबन्धिनः स्वरस्य अप्रसिद्धता अवधार्या सा चावर्णस्यैव ॥ वाति। प्राप्तः ॥ तारिन्। तारिताः ॥ पंकु। गतः ॥ वांचू। प्राप्ता ॥ मारून्। हता ॥ वात प्रापणे। अकर्मिणां भूते कर्तरि एय् (३९ सूत्रेण)। वातस्तात् (सू० ८६) इत्यनेन छिह् आदेशः छकारहकारयोर्लोपः। तार तारणे उन् प्रत्ययः। कर्मणि पुंब-हुत्वे इदाद्यस्वरस्य (सू० ४) इत्युकारस्य इकारः। पक गतौ। थकपकोरौवादीनां पुंवर्तमानादेशाश्छहोर्लोपश्च भूते (सू० ७७) इत्यनेन छुह् आदेशः छकारहका-रयोर्लोपः। वात प्रापणे ओव् प्रत्ययः। वातस्तात् (सू० ८६) इति छुह् आदेश-छहोर्लोपौ। पुंकर्तृप्रत्ययोकारस्य स्त्रियां च (सू० १०) इत्युकारस्य ऊमात्रादेशः। तवर्गस्याप्रसिद्ध (सू० ७२) इति चत्वम्। अनेन पूर्ववर्णस्वरस्याप्रसिद्धता। मार मारणे उन् प्रत्ययः। एकत्वे ऊमात्रादेशः (सू० ७)। अनेनोपधाया अप्रसिद्धता ॥

## ॥ उद्युतस्योपधाया आत ओत्वम् ॥ २० ॥

उकारयुतस्य वर्णस्य य उपधाभूत आकारस्तस्य ओत्वं भवति ॥ तोरुन्। तारितः ॥ वोतु। प्राप्तः ॥ तार तारणे उन्। व्यञ्जनं परेण संधेयम् (सू० १।३) रकारस्य उपधाया आकारस्य ओकारः। वात प्रापणे। अकर्मिणामिति (३९ सूत्रेण) ओव्। वातस्तात् ( सू० ८६ ) इति छुह् आदेशः छहोर्लोपश्च। तकारस्य उकारान्तत्वे सिद्धे अनेन उपधाकारस्य ओकारः॥ ओसु। आसीत्॥ आस सत्तायाम् उक्तवत् छुह् आदेशः। अनेन उपधाकारस्य ओकारः। उद्यु-तस्य किम्। तारिन्। तारितास्ते ॥ पूर्वं साधितम् ॥

## ॥ पुंस्येकारस्य यूदीतौ कर्मैकत्वानेकत्वे ॥ २१ ॥

पुंलिङ्गस्य एकत्वबहुत्वे कर्मणि सति उपधाभूतस्य एकारस्य क्रमेण यूदीतौ

भवतः भूतविषये । एकत्वे यूकारः बहुत्वे ईकारः ॥ ल्यूखुन् । लिखितम् । लीखिन् । लिखिताः ॥ पूर्वं साधितम् । च्यूटुन् । कुट्टितः ॥ च्चीटिन् । कुट्टिताः ॥ च्चेट कुट्टने उन् । कर्मणि पुंबहुत्वे (सू० ४) इत्यादिना उकारस्येकारः । अनेन क्रमादुपधाया यूकार ईकारौ ॥

## ॥ फेरव्यहमेलां च ॥ २२ ॥

एते धातवः कर्तर्येव नित्यं भवन्ति । एषां धातूनामुपधाया यूकार-ईकारौ भवतः । भूतविषये ॥ फ्यूरु । परिवर्तितः ॥ फीरि । परिवर्तिताः ॥ ब्यूठु । आसितः ॥ बीठि । आसिताः ॥ म्यूलु । संगतः ॥ मीलि । संगताः ॥ फेर भ्रमणविस्त्रीभवन-पश्चात्तापवैलोम्येषु । व्यह उपवेशने । मेल संगमे । पुंकर्तरि ( सू० ३९ ) इति ओव् एय् प्रत्ययौ । खरतरफ़रफेरमरमोरां रात् (सू० ९१) इति । व्यहो हात् (सू० ९७) इति । गलचलडलडोलफलफूलमेलां लात् (सू० ९३) इति सूत्रैः छुह् छिह् आदेशौ छहोर्लोपश्च । व्यहः डेषव्यहरोपमषां ठ ( सू० ६२ ) इति हस्य ठः । अनेन सर्वत्र क्रमात् यूईतौ । प्रोक्तानां धातूनां किम् । मेठ्यौव् । मधुरीबभूव ॥ पेड्यौव् । प्रसृतीबभूव ॥ ब्रेठ्यौव् । मूर्खीबभूव ॥ मेठ मधुरीभवने । पेड निर्यासे । ब्रेठ मूर्खीभवने । पुंकर्तरि (सू० ३९) इति औव् । यागमः सर्वेषु सामान्यपूर्णेषु च (सू० ४६) इति यकारागमः ॥

## ॥ स्त्रियामीदेतौ सर्वत्र ॥ २३ ॥

सर्वत्र एकत्वबहुत्वे कर्मणि कर्तरि च स्त्रीलिङ्गविषये उपधायाः क्रमात् ईकार-एकारौ भवतः । एकत्वे ईकारः बहुत्वे एकारः भूतविषये ॥ च्चीटून् । कुट्टिता ॥ च्चेचयन् । कुट्टिताः ॥ च्चेट कुट्टने उन् । एकत्वे ऊमात्रादेशः (सू० ८) । अपरत्र । स्त्रियां यत् ( सू० ९ ) इति उकारस्य यकारः । स्त्रियां भूतानेकत्वक-र्मणि च (७० सूत्रेण) इति टकारस्य चकारः । अनेन क्रमादीदेतौ ॥ फीरू । भ्रान्ता सा ॥ फेर्य । भ्रान्ताः ॥ बीठू । निविष्टा ॥ बेछ्य । निविष्टाः ॥

मीजू । मिलिता ॥ मेज्य । मिलिताः ॥ फेर भ्रमणे । ब्यह उपवेशने । मेळ संगमे । पुंकर्तरि ( सू० ३९ ) इति ओव् एय् । पूर्ववत् छुह् छिह् आदेशः छहोर्लोपः । पुंकर्तृप्रत्ययोकारस्य स्त्रियां च ( सू० १० ) इति एकत्र ऊमात्रादेशः । अपरत्र इकारस्य यत् ( सू० ११ ) इति यः । ब्यहः ढेषब्यहरोषमषां ठ ( सू० ६२ ) इति हस्य ठः । सादेशकर्तृभूतानेकत्वे च ( सू० ७० ) इति ठकारस्य छकारः । लान्तस्य ज ( ७४ ) इति लकारस्य जकारः । अनेन सर्वत्र क्रमादीकार-एकारौ ॥

## ॥ ओकारस्योकारः सादेशपुंकर्तरि च ॥ २४ ॥

सर्वस्मिन्ननेकत्वबहुत्वे पुंकर्मणि प्रत्ययादेशयुते सर्वस्मिन्पुंकर्तरि च उपधाभूतस्य ओकारस्य ऊकारो भवति भूतविषये ॥ बूज़ुन् । श्रुतः ॥ बूज़िन् । श्रुताः ॥ बूलुन् । भाषितम् ॥ बूलिन् । भाषिताः ॥ बोज़ निशामने । बोल पक्षिशब्दे च । उन् बहुत्वे उकारस्य इत् ( ४ सूत्रेण ) अनेनोपधाया ऊत्वम् ॥ कर्तरि यथा । रूठु । रुष्टः ॥ रूठि । रुष्टाः ॥ रोष रुष्टौ । पुंकर्तरि (सू० ३९) इति ओव् एय् । द्रुषपोषमषरोषां षात् ( सू० ९९ ) इति छुह् छिह् आदेशौ छहोर्लोपश्च । ढेषब्यहरोषमषां ठ (सू० ६२) इति षस्य ठत्वम् । अनेन उपधाया ऊकारः । सादेशकर्तरि किम । पोठ्यौव् । पुष्टं तेन ॥ पोर्यौव् । पर्याप्तम् ॥ पोठ स्थूलीभवने । पोर पर्याप्त्यनार्द्रत्वयोः पुंकर्तरि (सू० ३९) इति औव् । यागमः ( सू० ४६ ) ॥

## ॥ स्त्रियामूदोतौ ॥ २५ ॥

सर्वस्मिन्ननेकत्वबहुत्वे कर्मणि प्रत्ययादेशयुते एकत्वबहुत्वे स्त्रीकर्तरि च उपधाभूतस्य ओकारस्य ऊकार-ओकारौ भवतः भूतविषये ॥ बूज़ून् । श्रुता तेन ॥ बोजन् । श्रुतास्तेन ॥ कर्तरि यथा । रूठू । रुष्टा सा ॥ रोछ्य । रुष्टास्ताः ॥ एवमन्येषां ज्ञेयम् ॥

## ॥ मरश्च पुंसि ॥ २६ ॥

मर मरणे इत्यस्य धातोः सर्वस्मिन्कर्तरि पुंलिङ्गविषये उपधाया ऊत्वं भवति भूतविषये ॥ मूद्धु । मृतः ॥ मूद्दि । मृताः ॥ मर मरणे । पुकर्तरि (सू० ३९) इति ओव् एय् । खरतर ( सू० ९१ ) इत्यादिना छुह् छिह् आदेशछहोर्लोपौ । मरश्च मरणे ( सू० ६५ ) इति रस्य दत्वम् । अनेन उपधाया ऊत्वम् ॥

## ॥ लसश्च ॥ २७ ॥

लस सम्यग्जीवने इत्यस्य पुंलिङ्गे उपधाया ऊकारो भवति । तत्रैकत्वे ख्यातो बहुत्वे अप्रसिद्ध इति ज्ञेयम् ॥ लूस्तु । जीवितः ॥ लूंस्ति । जीविताः ॥ लूस्तुख् । जीवितस्त्वम् ॥ लूंस्तिव । जीविता यूयम् ॥ लूस्तुस् । जीवितोऽहम् ॥ लूंस्ति । जीविता वयम् ॥ लस सम्यग्जीवने । पुंकर्तरि ( सू० ३९ ) इति ओव् एय् ओख् एव ओस् एय् प्रत्ययाः । आसखसफस ( सू० ९६ ) इत्यादिना छुह् छिह् छुख् छिव छुस् छिह् क्रमादादेशाः छहोर्लोपश्च । लसश्च पुंभूते (सू० ३३) इति तकारागमः । अनेन उपधाया ऊत्वम् ॥

## ॥ स्त्रियामेकत्वानेकत्वे ऊदातावप्रसिद्धौ ॥ २८ ॥

लस सम्यग्जीवने इत्यस्य स्त्रीलिङ्गस्य एकवचनबहुवचनयोः क्रमात् उपधाया अप्रसिद्धौ ऊकार-आकारौ भवतः ॥ [ अत्रापि पूर्ववद्बहुत्वे एवाप्रसिद्धतास्तीत्यवधेयम् ॥ ] लूछ़ु । जीविता ॥ लांछ़ । जीविताः ॥ लूछ़ुख् । जीविता त्वम् ॥ लांछ़व । जीविता यूयम् ॥ लूछ़ुस् । जीविताहम् ॥ लांछ़ । वयं जीविताः ॥ लसधातोः ओव् आदयः प्रत्ययाः ( ३९ सूत्रेण ) तेषां छुह् आदय आदेशाः छहोर्लोपश्च (९६ सूत्रेण) । पुंकर्तृप्रत्ययोकारस्य स्त्रियां च (सू० १०) इति उकारस्य ऊमात्रादेशः । इकारस्य यत् (सू० ११) इति यः । लसश्च स्त्रियाम् (सू० ६७) इति सकारस्य थकारः । तवर्गस्याप्रसिद्ध (सू० ७२) इति थकारस्य

छकारः। अप्रसिद्धचवर्गादकार (सू० १२) इति सूत्रेण प्रत्ययकारस्याकारः। अनेन उपधायाः क्रमात् अप्रसिद्धौ ऊकार-आंकारौ॥

## ॥ सामान्यपूर्णयोरन्तिमः सर्वत्र ॥ २९ ॥

सर्वत्र पुंलिङ्गे स्त्रीलिङ्गे च एकत्वे बहुत्वे च सामान्यभूतपूर्णभूतयोर्विषये अन्तिमः अप्रसिद्धाकारादेश एव उपधाया भवति॥ पुंलिङ्गे यथा। लांछ्राव्। अजीवीत्॥ लांछ्राय्। अजीविषुः॥ लांछ्राव्। जिजीव॥ लांछ्राय्। जिजीवुः॥ स्त्रीलिङ्गे यथा। लांछ्राय। जिजीव सा॥ लांछ्राय। जिजीवुः॥ साधनं पूर्ववत्॥

## ॥ मरो वकारः ॥ ३० ॥

मर मरणे इत्यस्य सर्वत्र पुंलिङ्गे स्त्रीलिङ्गे च एकत्वबहुत्वयोश्च सामान्यभूतपूर्णभूतयोर्विषये उपधाया वकारो भवति॥ म्वयोव्। अमृत॥ म्वयाव्। मम्रे॥ म्वयेय्। अमृषन्त॥ म्वयाय्। मम्रिरे॥ स्त्रीलिङ्गे यथा। म्वयेय। अमृत सा॥ म्वयाय। सा मम्रे॥ मर मरणे। पुंकर्तरि (सू० ३९) इति ओव् आव् एय् आय्। यागमः सवर्षु सामान्यपूर्णेषु च (सू० ४६) इति यकारागमः। अनेनोपधाया वत्वम्। मरश्चापुंभूते (सू० ५९) इति रकारलोपः॥

## ॥ स्त्रियां भूतेऽपि ॥ ३१ ॥

मर मरणे इत्यस्य स्त्रीलिङ्गविषये भूतेऽपि उपधाया वकारो भवति॥ म्वय। मृता॥ मरधातोः ओव्। तस्य छ्यह् आदेशः छहोर्लोपश्च। अनेनोपधाया वत्वम्। मरश्चापुंभूते (सू० ५९) इति रकारलोपः। स्त्रियां किम्। मूड्। मृतः॥ पूर्वं साधितम्॥

## ॥ हिद्योस्तकारागमः ॥ ३२ ॥

हि ग्रहणक्रीणनधारणेषु । दि दाने । इत्यनयोर्भूतादिषु सर्वत्र तकारागमो भवति ॥ ह्यतुन् । प्रतिगृहीतः ॥ दितुन् । दत्तः ॥ ह्यत्नोन् । प्रत्यग्रहीत् ॥ दित्नोन् । अदात् ॥ ह्यत्नान् । प्रतिजग्राह ॥ दित्नान् । ददौ ॥ भूते उन् ( ३ सूत्रेण ) । सामान्यभूते ओन् (१४ सूत्रेण) । भूत विशेषे आन् (१५ सूत्रेण) । अनेन तकारागमः । हेरकारागमः ( ८।२।११ सूत्रेण ) । तवर्गस्याप्रसिद्ध (सू० ७२) इति तकारस्य त्सत्वम् ।

## ॥ लसश्च पुंभूते ॥ ३३ ॥

लस सम्यग्जीवने इत्यस्य पुंलिङ्गविषये भूते तकारागमो भवति ॥ लूस्तु । जीवितः ॥ लूस्ति । जीविताः ॥ साधितचरम् । पुंलिङ्गे किम् । लूछ् । जीविता सा ॥ भूते किम् । लाछाव् । जिजीव ॥ पूर्वं साधितानि ॥

## ॥ नेरूदीतौ प्रत्ययोकारेकारयोः ॥ ३४ ॥

नि हरणे । अस्माद्धातोः प्रत्ययसंबन्धिनोरुकार-इकारयोः क्रमात् ऊकार-ईकारौ भवतः ॥ न्यून् । हृतः ॥ नीन् । हृताः ॥ नि धातोः उन् । कर्मणि पुम् (सू० ४) इत्यादिना अपरत्नोकारस्य इकारः । अनेन ऊकार-ईकारौ क्रमात् । पूर्वत्र यत्वम् । अपरत्र स्वरः सवर्णे दीर्घपरलोपौ (सू० ११५) ॥

## ॥ पूर्णभूते आन् आख् आथ् आव आम् आव् प्रत्ययाः पुमेकत्वे ॥ ३५ ॥

भावकर्मिणां धातूनां पूर्णभूते पुंलिङ्गस्य एकत्वे कर्मणि सति आन् आदयः प्रत्ययाः स्युः ॥ बोज़ान् । तेन शुश्रुवे ॥ बोज़ाख् । तैः शुश्रुवे ॥ बोज़ाथ् ।

शुश्रुवे त्वया ॥ बोज़ाव । युष्माभिः शुश्रुवे ॥ बोज़ाम् । मया शुश्रुवे ॥ बोज़ाव् । अस्माभिः शुश्रुवे ॥ बोज़ निशामने । पूर्णभूते आन् आदयः प्रत्ययाः । यागमः सर्वेषु सामान्यपूर्णेषु च (सू० ४६) इति यकारागमः । तस्य अप्रसिद्धच्ववर्गाल्लोप (सू० ४७) इति लोपः ॥

## ॥ धातोरे बहुत्वे ॥ ३६ ॥

पूर्णभूते बहुत्वे कर्मणि सति धातोः पर एकारः प्रयोज्यः ॥ करेयेन् । तेन चक्रिरे ॥ करेयेख् । तैश्चक्रिरे ॥ करेयेथ् । त्वया चक्रिरे ॥ करेयेव । युष्माभिश्चक्रिरे ॥ करेयेम् । मया चक्रिरे ॥ करेयेय् । अस्माभिश्चक्रिरे ॥ कर करणे । पूर्णभूते आन् आदयः । बहुत्वे एकार (सू० १९) इत्याकारस्य एकारः । यकारागमः (४६ सूत्रेण) । अनेन धातोः पर एकारः ॥

## ॥ अप्रसिद्धचवर्गादा ॥ ३७ ॥

अप्रसिद्धच्ववर्गान्ताद्धातोरप्रसिद्ध आ प्रयोज्यः ॥ बोज़ायेन । तेन शुश्रुविरे ॥ छ्यन्नायेन् । प्रतिजगृहिरे ॥ साधितचरम् ॥

## ॥ सामान्यवत्स्त्रीकर्मणि ॥ ३८ ॥

पूर्णभूते स्त्रीलिङ्गस्य एकत्वादिके कर्मणि सति सामान्यभूतवत्स्वरूपाणि भवन्ति । एकत्वबहुत्वयोरेकरूपाणीत्यवधार्यम् ॥ उदाहरणानि सामान्यभूते विशदीकृतानि ॥

## ॥ पुंकर्तरि ओव् एय् ओख् एव ओस् एय् भूते प्रत्ययाः ॥ ३९ ॥

अतीतकाले कर्तरि नियतानां धातूनां पुंलिङ्गे कर्तरि सति भूते ओव्

गौणकल्पनयार्थविपर्यास इति। एवं क्रियात्रितयसमुदाये वर्तमानद्वयसत्त्वे मुख्यगौणकल्पनयार्थविलोमता न संभवति । वर्तमानैकसत्त्वे तु भविष्यदप्रधानक्रियया संबन्धे सति मुख्यगौणकल्पनयार्थविनिमयः । प्रधानक्रियया तु नार्थविपर्यय इति। अत्रातीतादिकालाः क्रियाकालापेक्षया निर्णेयाः न तु वर्तमानकालापेक्षयेति ॥ क्रमादुदाहरणानि ॥ ख्यवान् गछान् छुह्। खादन् गच्छति ॥ ख्यथ् क्यथ् गछान् छुह् । भुक्त्वा गच्छति ॥ ख्यवान् गछि । खादन् गमिष्यति ॥ ख्यथ् गयाव् । भुक्त्वा जगाम ॥ ख्यथ् गछि । भुक्त्वा गमिष्यति ॥ परनस् कितु गछि । पठितुं गमिष्यति ॥ ख्यवान् ख्यवान् परनस् कितु गयोव् । खादन्पठितुं जगाम ॥ परिथ् ज़ेननस् कितु गछान् छुह् । पठित्वा जेतुं व्रजति ॥ द्यथ् क्यथ् दवान् पकि । धृत्वा धावन्गमिष्यति ॥ दिथ् क्यथ् द्रकान् गौव् । दत्त्वा धावञ्जगाम ॥ ज़ेननस् कितु दवान् गछि । जेतुं धावन्गमिष्यति ॥ दिथ् क्यथ् ख्यनस् कितु गछि । दत्त्वा भोक्तुं गमिष्यति ॥ च्यथ् क्यथ् असान् यिवान् छुह् । पीत्वा हसन्नायाति ॥ श्रान् करिथ् परनस् कितु गयोव् । स्नात्वा पठितुं ययौ ॥ नच्चान् बसनस् कितु गछान् छुह् । नृत्यन्निवसितुं याति ॥

## ॥ वर्तमाने धातुभ्य आन् ॥ २ ॥

मुख्यक्रियाया वर्तमानकाले चशब्दं विना अपरक्रियायां वाच्यायां सत्यां धातुभ्य आन् प्रत्ययो भवति स चाव्ययः ॥ करान् । कुर्वन् ॥ बोज़ान् । शृण्वन् ॥ परान् । पठन् ॥ इत्यादि । कर करणे । बोज़ निशामने । पर पठने । अनेन आन् प्रत्ययः ॥

## ॥ वपूर्वः स्वरान्तात् ॥ ३ ॥

स्वरान्ताद्धातोरान् प्रत्ययः वकारपूर्वो भवति क्रियावर्तमाने गम्यमाने सति ॥ दिवान् । ददन् ॥ ख्यवान् । खादन् ॥ च्यवान् । पिबन् ॥ दि दाने । ख्रि खादने । चि पाने । अनेन वान् प्रत्ययः । चिख्योः सर्वत्राकारागमो निदियिवर्जितात् ( सू० ८।२।११ ) इत्यकारागमः ॥

## ॥ आभीक्ष्ण्ये द्विश्च पदम् ॥ ४ ॥

आभीक्ष्ण्ये असकृत्कर्मणि गम्यमाने पदं द्विर्द्विवारं प्रयोज्यम् ॥ दिवान् दिवान् गौव् । ददद्ददद्गतः ॥ च्यवान् च्यवान् आव् । पिबन्पिबन्नागतः ॥ परान् परान् करुन् । पठन्पठन्नकरोत् ॥

## ॥ अतीते इथ् ॥ ५ ॥

मुख्यक्रियाकाले चशब्दं विना तदितरातीतक्रियायां गम्यमानायां धातोः इथ् प्रत्ययः स्यात् ॥ करिथ् । कृत्वा ॥ परिथ् । पठित्वा ॥ दारिथ् । धृत्वा ॥ साधनं सुगमम् ॥

## ॥ इथः क्यथ् वा ॥ ६ ॥

इथ् प्रत्ययात्परो विकल्पेन क्यथ् प्रत्ययो भवति ॥ करिथ् क्यथ् । कृत्वा ॥ परिथ् क्यथ् । पठित्वा ॥ दारिथ् क्यथ् । धृत्वा ॥ पक्षे । करिथ् । कृत्वा ॥ परिथ् । पठित्वा ॥ दारिथ् । धृत्वा ॥ इति पूर्वं साधितानि ॥

## ॥ स्वरान्तादिथो ऽत् ॥ ७ ॥

स्वरान्ताद्धातोः इथः इकारस्य अत् अकारो भवति ॥ ध्यथ् क्यथ् । धृत्वा ॥ ख्यथ् क्यथ् । खादित्वा ॥

## ॥ निदियिभ्य इलोपः ॥ ८ ॥

नि हरणे । दि दाने । यि आगमने । एभ्य इकारलोपो भवति ॥ निथ् । हृत्वा ॥ दिथ् । दत्त्वा ॥ यिथ् । आगत्य ॥

## ॥ वुडो ज इथि मोक्षे ॥ ९ ॥

वुड उड्डयने इत्यस्य इथ् प्रत्यये परे डकारस्य जकारो भवति मोक्षे गम्यमाने ॥ वुजिथ् गौव् । मोक्षं गत इत्यर्थः ॥

## ॥ मंषृावो रलोपः स्वरविनिमयश्च मरणकर्मणि ॥ १० ॥

मंष्राव विस्मारणे इत्यस्य धातोर्मरणपदे कर्मणि सति इथ् प्रत्यये परे रकारस्य लोपो भवति पूर्वापरस्वरविनिमयश्च स्यात्। पूर्वस्य दीर्घो द्वितीयस्य ह्रस्वो भवतीत्यर्थः ॥ मरुन् माषविथ् । मरणं विस्मारयित्वेत्यर्थः ॥

## ॥ इ प्रत्यय आभीक्ष्ण्ये द्विश्च पदम् ॥ ११ ॥

अतीते काले आभीक्ष्ण्ये गम्यमाने धातोः इ प्रत्ययो भवति पदं च द्विर्भवति ॥ क॑रि क॑रि । कारं कारम् ॥ बूज़ि बूज़ि । श्रावं श्रावम् ॥ लूनि लूनि । लावं लावम् ॥

## ॥ स्वरान्ताद्वा ॥ १२ ॥

स्वरान्ताद्धातोः अतीतकाले आभीक्ष्ण्ये गम्यमाने विकल्पेन इ प्रत्ययो भवति। पदं च द्विर्भवति ॥ दि दि। दायं दायम् ॥ यि यि। एत्यैत्य ॥ ख्य ख्य । भुक्त्वा भुक्त्वा ॥ प्रथमयोः निदियिभ्य इलोपः (सू० ८) । तृतीयस्य स्वरान्तादिथो ऽत् ( सू० ७ ) इति इकारस्य अकारः । इकारो ऽसवर्णे यो ऽपरलोपः (सू० १।१०) । पक्षे दिथ् दिथ् । दायं दायम् ॥ यिथ् यिथ् । एत्यैत्य ॥ ख्यथ् ख्यथ् । भुक्त्वा भुक्त्वा ॥ च्यथ् च्यथ् । पायं पायम् ॥ साधनं पूर्ववत् ॥

## ॥ आदुपधाया अप्रसिद्धता ॥ १३ ॥

अतीतक्रियायां धातोरुपधाभूतस्याकारस्याप्रसिद्धता भवति ॥ कारिथ् । कथित्वा ॥ मारिथ् क्यथ् । हत्वा ॥ तारिथ् । तारयित्वा ॥ एवं । कारि कारि । काथं काथम् ॥ मारि मारि । मारं मारम् ॥ तारि तारि । तारं तारम् ॥ साधनं सुगमम् ॥

## ॥ एत ईत् ॥ १४ ॥

अतीतक्रियायां धातोरुपधाभूतस्य एकारस्य ईकारो भवति ॥ च्नीटि च्नीटि । कुट्टं कुट्टम् ॥ बीहि बीहि । आसमासम् ॥ लीखि लीखि । लेखं लेखम् ॥ च्नेट कुट्टने । ब्यह उपवेशने । लेख लेखने । इ प्रत्यय आभीक्ष्ण्ये द्विश्च पदम् (सू० ११) इति इ प्रत्ययः ॥ [ ब्यह धातुरस्य विधेरनाश्रयः । किंच बिहि बिहि इति ह्रस्वेकारेणैव पाठः शुद्धो ऽस्ति ॥ ]

## ॥ ऊदोकारस्य ॥ १५ ॥

अतीतक्रियायां धातोरुपधाभूतस्य ओकारस्य ऊकारो भवति ॥ खूत्रि खूत्रि । भायं भायम् ॥ बूज़ि बूज़ि । श्रावं श्रावम् ॥ तूलि तूलि । तोलयं तोलयम् ॥ एवं । खूत्रिथ् । भीत्वा ॥ बूज़िथ् । श्रुत्वा ॥ तूलिथ् । तोलयित्वा ॥ साधनं सुगमम् ॥

## ॥ आनादयो ऽव्ययम् ॥ १६ ॥

आन् इथ् इथ्-क्यथ् इ इति चत्वारः प्रत्यया अव्ययमव्ययसंज्ञा भवन्ति ॥

## ॥ भविष्यति कितु पदम् ॥ १७ ॥

प्रधानक्रियाया भविष्यत्काले इतरस्याप्रधानायां क्रियायां गम्यमानायां

धातोः कितु इति पदं भवति । पदग्रहणात् कितु इत्यस्य पुंस्त्रीत्वमेकत्वानेकत्वं च भवतीति विज्ञेयम् ॥ परनस् कितु । पठितुं सः ॥ रननस् कितु । पक्तुं सः ॥ परनस् किच़ू । पठितुं सा ॥ रननस् किच़ू । पक्तुं सा ॥ परनस् किति । पठितुं ते ॥ रननस् किच़ । पक्तुं ताः ॥ पर पठने । रन पाके । अनेन कितु । किता- वनस् ( सू० २० ) इति अनस् आगमः । द्वितीययोः सर्वेषामुकारान्तानामू- कारादेश ( सू० ६।४ ) इति सूत्रेण ऊमात्रादेशः । तवर्गान्तानामप्रसिद्ध ( सू० ६।११ ) इति तकारस्य च़कारः । तृतीययोरेकस्य उवर्णान्तानामिकारः ( सू० २ । १ । ३० ) इति उकारस्य इकारः । अपरस्य ऊमात्रादेशे तकारा- देशे च कृते । बहुत्वे ऽकारागम ( सू० २ । १ । ११ ) इत्यकारागमः । उव- र्णान्तानामिकार ( सू० २ । १ । ३० ) इति ऊकारस्य इकारः । इकारो ऽस- वर्णे यो ऽपरलोप ( सू० १ । १० ) इति यत्वम् । तस्य अप्रसिद्धच़वर्गाल्लोप ( सू० ८ । ३ । ४७ ) । च़ेटनस् कितु । कुट्टयितुं सः ॥ च़ेटस् कितु ( सू० ९ । २।१२ ) कुट्टनाय सः ॥ ग्रज़नस् कितु । गर्जितुं सः ॥ ग्रज़ि कितु ( सू० ९।२।६५ ) गर्जनाय सः ॥ इति चतुर्थीस्वरूपाणि च तेषां धातूनां दृश्यन्ते येषां भावा अनेकधा भवन्ति । येषां तु पुंस्त्रीभेदाद्द्विविध एव स्यान्न तत्र चतुर्थीप्रयोगेन सिद्धिः । किंतु वक्ष्यमाणव्यञ्जनान्तेभ्यो धातुभावशब्देभ्यश्चतुर्थी- प्रोक्तप्रत्ययेषु कृतेषु व्यञ्जनान्तस्योकारोपधाया अत् ( सू० २ । १ । ३२ ) इत्यादिना चतुर्थीस्वरूपं सेत्स्यतीति ॥

## ॥ अनि च ॥ १८ ॥

प्रधानक्रियाया भविष्यत्काले इतरस्यामप्रधानायां क्रियायां गम्यमानायां धातोः परः अनि प्रत्ययो भवति ॥ परनि गछान् छुह् । पठितुं व्रजति ॥ रननि गौव् । पक्तुं गतः ॥ ख्यनि गछि । अत्तुं यास्यति ॥

## ॥ समखः शुक्प्रष्टव्ये नित्यम् ॥ १९ ॥

समख समक्षीभवने इत्यस्य धातोः शोके प्रष्टव्ये सति नित्यमनि प्रत्ययो भवति ॥ समखनि गौव्। शोकपृच्छायै गत इत्यर्थः ॥ अन्यत्र । समखन-पुछ्य् कृदु । समक्षीभवनाय स्थितः ॥

## ॥ कितावनस् ॥ २० ॥

धातोः कितु प्रत्यये परे अनस् आगमो भवति ॥ करनस् कितु। कर्तुं सः। साधनं सुगमम् ॥

## ॥ निदियिभ्यो ऽकारलोपः ॥ २१ ॥

नि हरणे। दि दाने। यि आगमने। एभ्यः परस्य अकारस्य लोपो भवति ॥ निनस् कितु। हर्तुं सः ॥ दिनस् कितु। दातुं सः ॥ यिनस् कितु। आगन्तुम् ॥

## ॥ उनु वा ॥ २२ ॥

धातोः कितु प्रत्यये उनु ( सू० ९।२।३ ) आगमो विकल्पेन भवति ॥ करुनु कितु। कर्तुं सः ॥

## ॥ उन्वन्तं लिङ्गवत् ॥ २३ ॥

अत्र वक्ष्यमाणे भावविकल्पस्वरूपे च उनु ( सू० ९।२।३ ) अन्ते यस्य तत्पदं लिङ्गवद्भवति। यथा कितु प्रत्ययस्य पुंस्त्रीत्वमेकत्वानेकत्वं च संभवति तथैव तस्मात्पूर्वस्य उनु विशिष्टस्य धातोरपि भवति ॥ रनुनु कितु। पक्तुं सः ॥ रनंनि किति। पक्तुं ते ॥ करंस् किचू। कर्तुं सा ॥ करञ्ज किञ्ज। कर्तुं ताः ॥ साधनमुक्तवत् ॥

## ॥ स्वरान्तेभ्यो ऽनिदियिभ्य आदेरत् ॥ २४ ॥

नि हरणे । दि दाने । यि आगमने एतान्वर्जयित्वा स्वरान्तेभ्यो धातुभ्यः उनु प्रत्ययस्यादेरुकारस्य अकारो भवति ॥ ख्यनु कितु । खादितुं सः ॥ च्यनु कितु । पातुं सः ॥ प्यनु कितु । पतितुं सः ॥ ह्यनु कितु । वोढुं सः ॥ अनिदियिभ्यः किम् । दिनु कितु । दातुं सः ॥ निनु कितु । हर्तुं सः ॥ यिनु कितु । आयातुं सः ॥ साधनं पूर्ववत् ॥

## ॥ कर्तरि वुनु ॥ २५ ॥

धातोः कर्तर्यर्थे वुनु प्रत्ययो भवति ॥ करवुनु । कर्ता ॥ परवुनु । पाठकः ॥

## ॥ वुनावकारागमः ॥ २६ ॥

धातोः वुनु प्रत्यये परे अकारागमो भवति ॥ व्यठवुनु । स्थूलीभवन ॥ पोठवुनु । पोष्टा । सुगमम् ॥

## ॥ स्वरान्तेभ्यो वपूर्वः ॥ २७ ॥

स्वरान्तेभ्यो धातुभ्यो वपूर्वः अकारागमः वकारागमो भवति ॥ निववुनु । हारकः ॥ दिववुनु । दायकः ॥ यिववुनु । आगन्ता ॥ एवं । ख्यववुनु । खादकः ॥ च्यववुनु । पायकः ॥ ह्यववुनु । क्रायकः ॥ अत्र वकारागमे कृते सर्वत्राकारागमो निदियिवर्जितात् ( सू० ८।२।११ ) इति धातोरेव अकारागमः ॥

## ॥ वोलुग्राक् पदौ च ॥ २८ ॥

धातोः कर्तर्यर्थे वोलु प्रत्ययः ग्राक् प्रत्ययश्च भवति उदाहरणमुत्तरसूत्रे ॥

## ॥ तयोरनागमः ॥ २९ ॥

तयोर्वोलु ग्राक् प्रत्यययोः परयोर्धातोः अन् आगमो भवति ॥ करन्-बोलु । कर्ता ॥ परन्-वोलु । पठिता ॥ एवं । करन्-ग्राख् । कर्ता ॥ परन्-ग्राख् । पाठकः ॥ पदसंज्ञाव्यपदेशाद्वक्ष्यमाणपुंस्त्रीभावपदात्परौ प्रयुक्तौ सन्तौ प्रोक्तसमासवत्सिद्धिरवधार्या ॥ तद्यथा । ज़ानुन् भावपदात् अग्रे बोलुपदं । व्यञ्जनान्तस्योकारोपधाया अत् (सू० २।१।३२) इति उपधाया उकारस्य अकारः ॥ एवं । ज़ांञ्-वोलु । अत्र ज़ान् (सू० ९।२।७१) भावपदात् अग्रे बोलु पदम् । तवर्गान्तानामप्रसिद्ध (सू० ६।११) इति नकारस्य ञकारः । कृतादेशानामूमात्रा आगम (सू० २।१।१६) इति ऊमात्रा आगमः ॥ ज़ानन्-वोलु । ज्ञाता ॥ ज़ांञ्-वोलु । ज्ञाता ॥ इति सिद्धम् । यस्यैव धातोः स्वार्थे पुंस्त्रीरूपे भावपदे स्यातां तस्यैव स्वरूपद्वयं संगच्छत इत्यवधार्यम् ॥ [ यस्यैवेत्यत्रायमर्थः यस्य धातोः स्वार्थे निजार्थे कर्तुः स्वस्यैवात्मन आन्तरधर्मद्योतके न तु केनचिद्बाह्येन कर्मादिना संयुज्यमानार्थके पुंस्त्रीरूपे पुंसि स्त्रियां च न तु द्वयोरन्यतरास्मिन्नेव निष्पद्यमानप्रयोगे भावपदे वक्ष्यमाणभावप्रत्ययान्तरूपे स्यातां तस्यैवेति। यथात्र ज़ानुन् ज़ान् इत्युभे पुंस्त्रीरूपे भावपदे कर्तृसंबन्धिज्ञानरूपस्यान्तरधर्मस्य वाचके स्त इति बोध्यम् । करादीनां ( सू० ९।२।२। ) स्वबाह्यकर्मसंयोगात् च़रादीनां (सू० ९।२।२४) नित्यस्त्रीभावात् छ्वकादीनां (सू० ९।२।९) स्त्रीभावप्रत्ययान्तभावाभावात् डलादीनां (सू० ९।२।२७) बाह्यधर्मसंयोगभावात्पदसंज्ञाव्यपदेशादित्यादिना सूचितविधेरप्रसक्ततोक्तेति ॥]

## ॥ स्वरान्तात्सस्वरः ॥ ३० ॥

सः अन् आगमः स्वरान्ताद्धातोः सस्वरः स्वरान्तो भवति ॥ ख्यन-वोलु । खादिता ॥ च्यन-वोलु । पाता ॥ एवं । ख्यन-ग्राख् । भक्षकः ॥ च्यन-ग्राख् पायकः ॥

## ॥ न्यादीनामल्लोपः ॥ ३१ ॥

नि हरणप्रापणयोः । दि दाने । यि आगमने । इत्येषाम् अन् आगमस्य अकारलोपो भवति ॥ निन-वोलु । नेता ॥ दिन-वोलु । दाता ॥ यिन-वोलु । आगन्ता ॥ एवं । निन-ग्राख् । नायकः ॥ दिन-ग्राख् । दायकः ॥ यिन-ग्राख् । आगन्ता ॥

## ॥ दिदावोर्नल्ललौ व्यभिचारिण्याम् ॥ ३२ ॥

दि दाने । दाव दापने । इत्यनयोर्व्यभिचारिण्यां स्त्रियां क्रमेण नल् अल् प्रत्ययौ भवतः ॥ दिनल् । व्यभिचारिणी ॥ दावल् । व्यभिचारिणी ॥

## ॥ कर्मोपपदे पुंस्य ऽश्लीले ॥ ३३ ॥

तयोर्दिदावोः कर्मण्युपपदे सति पुंसः अश्लीले नल् अलौ भवतः॥ माज्य-दिनल् । मातृगामी ॥ व्यञ्ञ-दिनल् । स्वसृगामी ॥ कोरि-दिनल् । कन्यागामी ॥ एवं । माज्य-दावल् । व्यञ्ञ-दावल् । कोरि-दावल् ॥

## ॥ नलो लो वा ॥ ३४ ॥

नल् प्रत्ययस्यादेर्विकल्पेन लकारो भवति ॥ माज्य-दिलल् ॥

## ॥ क्वचिल्लोपः ॥ ३५ ॥

नल् प्रत्ययस्यादेः क्वचिल्लोपो भवति ॥ माज्य-दिल् । मातृगामी ॥

## ॥ प्रधानातीते उः ॥ ३६ ॥

धातोः प्रधाने क्रियारूपे अतीते गम्यमाने उ प्रत्ययो भवति ॥ कंरु । कृतम् ॥ पंरु । पठितम् ॥ खंनु । खातम् ॥

## ॥ चिख्योरौवादेशः ॥ ३७ ॥

चि पाने । खि खादने । इत्यनयोः ऊ् प्रत्ययस्य औव् आदेशो भवति ॥ च्यौव् । पीतम् ॥ ख्यौव् । भुक्तम् ॥

## ॥ नेरूव् ॥ ३८ ॥

नि हरणे इत्यस्मात् ऊ् प्रत्ययस्य ऊव् आदेशो भवति ॥ न्यूव् । नीतम् ॥ तत्र युष्मच्छब्दकर्तरि आख्यातोक्तभूतक्रियैव (सू० ८।३।३४) मुख्या स्पष्टा च प्रोक्ता तु गौणेति बोध्यम् ॥

## ॥ कर्तृधातूनामाख्यातभूतक्रियैव नित्यम् ॥३९॥

येषां धातूनामतीतकाले कर्तृप्रयोगा एव भवन्ति तेषामाख्यातोक्तभूतकालक्रियैव नित्यं भवति कर्मप्रयोगाभावात् ॥ चलु । पलायितः ॥ चलि । पलायिताः ॥ व्यछ्योव् । पृष्टः ॥ व्यछ्येय् । पृष्टाः ॥ आख्यातप्रक्रियायां साधितानि ॥

## ॥ भूतपदान्मंतु पदं कर्मणि ॥ ४० ॥

कर्मणि धातुक्रियाविशिष्टे पदार्थे अभिधेये सति कर्मधातोः कृदुक्तभूतक्रियापदात् कर्तृधातोश्चाख्यातोक्तभूतपदात् मंतु पदं भवति । मंतु पदे तु मुतु इति उकारविशिष्टं च व्यवह्रियते । भूतपदग्रहणेन यथा मंतु पदस्य प्रथमादिविभक्तिपरिणामो भवति एकत्वानेकत्वपुंस्त्रीपरिणामश्च भवति तथा तत्तद्भूतक्रियापदस्यापि भवति। मंतु विशिष्टं पदं त्वेकमेव भवति न तु द्वितयम् ॥ करु-मंतु । कृतम् ॥ करू-मंचू । कृता ॥ गरु-मंतु । घट्टितम् ॥ गरू-मंचू । घट्टिता ॥ करि-मंति । कृतानि ॥ कर्य-मच्न । कृताः ॥ गरि-मंति । घट्टितानि ॥ गर्य-मच्न । घट्टिताः ॥ कर करणे । गर घट्टने । प्रधानातीते उः (सू० ३६) । करु पदात् गरु पदाच्चानेन मंतु पदम् । पुंबहुत्वे पूर्वोत्तरपदयोरन्त्यस्वरस्य इकारः । स्त्रीलिङ्गे ऊमात्रादेशः । तका-

रस्य च ऩत्वम् । एवं सर्वत्र विभक्तिगणे विज्ञेयम् ।। कर्तृधातूनां यथा । व्यथ्यो-मंतु । स्थूलीभूतः ।। खूचु-मंतु । भीतः ।। व्यठ स्थूलीभवने औव् यागमः (८।३।४६ सूत्रेण) व्यठ्योव् पदात् मंतु पदम् । संबन्धिप्रत्ययेषु वयोर्लोप (सू० ८।३।४१) इति वकारस्य लोपः । एवं । खोऩ भये ओव् तस्य छुह् आदेशः छह्लोर्लोपश्च । ओ-कारस्योकारः सादेशपुंकर्तरि च (सू० ८।३।२४) इत्युपधाया ऊकारः । खूचु पदात् मंतु पदम् ।। ननु कर्तृधातूनां वकारस्य लोपे ओदन्तावशेषणादोदन्तस्य च लिङ्ग-प्रयोगादर्शनात्कथं पूर्वपदस्य लिङ्गपरिणामः क्रियते । अत्रोच्यते यथा उकारान्तस्य प्रथमाबहुत्वादिषु एकमात्र एव इकारादेशः क्रियते तथैव द्विमात्रस्य संध्यक्षरस्य ओकारस्यापि द्विमात्रसंध्यक्षरस्य एकारस्यादेशो भवतीति बोध्यम् । तेन व्य-ठ्ये मंति । स्थूलीभूताः ।। यद्वा । व्यथ्येय् इति बहुवचनभूतक्रियाया मंतु पदे कृते प्रोक्तसूत्रेण यकारलोपात्सेत्स्यतीति ।। एकाक्षरावशिष्टानां तु पदसंज्ञानिवृत्तिः ।। तेन । आमंतु । आगतः ।। आमंति । आगताः ।। ऩामंतु । प्रविष्टः ।। ऩामंति । प्रविष्टाः ।। द्रामंतु । निर्गतः ।। द्रामंति । निर्गताः ।। प्यामंतु । प्रसूतः ।। प्यामंति । प्रसूताः ।। ज़ामंतु । जातः ।। ज़ामंति । जाताः ।। मूदु इति क्रियापदस्य मंतौ अन्त्यव्यञ्जनादेर्विकल्पेन लोप इष्यते ।। मूदु-मंतु । मृतः ।। पक्षे । मूमंतु । मृतः ।। स्त्रीलिङ्गे तु नित्यमिष्यते ।। मूमंचू । मृता ।। मूमच़ । मृताः ।।

## ।। हेः पूर्वं भावपदं चारब्धे ।। ४१ ।।

हि ग्रहणादिषु इत्यस्य धातोः कृदुक्तभूतपदात्परं मंतु पदं भवति । धातोः पूर्वं च भावपदं ( सू० ९।२।३ ) प्रयोज्यम् आरब्धे कर्मणि अभिधेये सति ।। ग्यवुनु ह्यंतु मंतु । गीयमानम् ।। करुनु ह्यंतु मंतु । क्रियमाणम् ।।

## ।। गछो ऽतीतानागतौ धातुभावतस्तव्यार्थे ।।४२।।

अत्र शब्दशास्त्रे तव्यार्थकः शब्दः अतीतकाले भविष्यत्काले च भवतीति बोध्यम् । गछ सामञ्जस्ये इत्यस्य प्रधानभूतकालस्वरूपं प्रधानभविष्यत्कालस्वरूपं

च धातोर्भावशब्दाद्वक्ष्यमाणरीत्या पूर्वे परे वा प्रयुज्येते क्रमेण भूततव्यार्थभविष्यत्तव्यार्थके भवतः ॥ च़य गंछु गछुनु। त्वया गन्तव्यं भूते॥ त्वह्य गंछु गछुनु। युष्माभिर्गन्तव्यम् ॥ अनागते यथा ॥ तंनु गछि़ गछुनु । तत्र गन्तव्यम् ॥ साधनं सुगमम् ॥

## ॥ विधिनिषेधयोर्लग: ॥ ४३ ॥

लग संगे पीडायां च इत्यस्य स्वरूपं धातोर्भावशब्दात्प्रयोज्यम् विधौ निषेधे च गम्यमाने। तत्र अतीतक्रियाया विधिनिषेधयोर्निषेधादनागतस्वरूपमेव ज्यायः न भूतस्वरूपं। किंत्वपूर्णभूतस्वरूपं युज्यते ॥ तंनु लगि गछुनु। तत्र गन्तव्यम् ॥ तंनु लगि न गछुनु। तत्र न गन्तव्यम् ॥ तंनु लगिहे गछुनु [। तत्र गन्तव्यं योग्यमभविष्यत् ] ॥

## ॥ भाव्यार्थे पज़श्च ॥ ४४ ॥

पज़ युक्तीभवने इत्यस्यातीतापूर्णभूतस्वरूपं धातुभावतः प्रयोज्यं चशब्दाद्भूतप्रयोगाश्च भाव्ये सामञ्जस्ये गम्यमाने ॥ तंनु पज़ि गछुनु। तत्र गमनेन भाव्यम् ॥ तंनु पज़िहे गछुनु। [तत्र गन्तव्यं योग्यमभविष्यत् ॥] एवमन्यत् ॥

## ॥ षष्ठी तृतीया वैषां कर्तरि ॥ ४५ ॥

एषां प्रोक्तानां गछादीनां कर्तरि षष्ठी तृतीया वा स्यात् ॥ च़य गंछु करुन्। त्वया कर्तव्यं भूते ॥ वा। च्योनु गंछु करुन्। ते कर्तव्यं भूते ॥ च़य पज़ि रनुन्। त्वया पक्तव्यम् ॥ च्योनु पज़ि रनुन्। तव पक्तव्यम् ॥ च़य लगि दपुन्। त्वया वाच्यम् ॥ च्योनु लगि न दपुन्। तव न वक्तव्यम् ॥

## ॥ एभ्य एव संबन्धप्रत्ययाश्च ॥ ४६ ॥

एभ्यो गछादिभ्यः स्वरूपेभ्यस्तत्संबन्धादिप्रत्ययाश्च भवन्ति न तु धातुभावतः ॥ गंछुस् करुन् । तस्मै कर्तव्यं भूते ॥ गंछुय् करुन् । तुभ्यं कर्तव्यम् भूते ॥ एवं । लग्यस् करुन् । कर्तव्यं तस्य ॥ लगिय् करुन् । कर्तव्यं तव ॥ लग्यम् करुन् । कर्तव्यं मम ॥ एवं । पज़्यस् परुन् । पाठेन तस्य भाव्यम् ॥ पज़्यम् परुन् । पाठेन मम भाव्यम् ॥

## ॥ एकपदे भावतः परा वा ॥ ४७ ॥

एकस्मिन्नेव क्रियारूपे पदे वक्तव्ये सति गछादीनां प्रयोगा भावतः परा वा प्रयोज्याः ॥ गंछु गछुन् वा गछुन् गंछु [ । गन्तव्यम् ] ॥ लगि परुन् वा परुन् लगि [ । पठितव्यम् ] ॥ पजि़ ख्यंनु वा ख्यंनु पाजि़ । अत्तव्यम् ॥

## ॥ अनेकपदेषु वाक्यारम्भपदात् ॥ ४८ ॥

एकाधिकपदैर्वाक्ये वक्तव्ये सति वाक्यस्य आरम्भपदादग्रे ते गछादीनां प्रयोगाः स्युः ॥ अद गंछु तंतु गछुनु । ततस्तत्र गन्तव्यम् ॥ एवं । अद लगि तति बिहनु । ततस्तत्रासितव्यम् ॥ एवम् । अद पजि़ तति दपुनु । ततस्तत्र वक्तव्यम् ॥ एवमन्यत् ॥

## ॥ गछो गतागतप्रयोगा उदन्तभावतः कामार्थे ॥ ४९ ॥

इच्छार्थे गम्यमाने सति गछ़ गतौ सामञ्जस्ये च इत्यस्य अतीतानागतकालिकाः सर्वे प्रयोगा उकारान्तभावतः प्रयोज्याः । ते तु कर्तर्येव ज्ञेयाः । भावस्योकारान्तत्वं च धातुवत् एकत्वानेकत्वपरिणामार्थमिति ॥ तत्रानागते यथा ।

सुह् गछि गछुनु [ । स गच्छतु ] ॥ तिम् गछन् गछंनि [ । ते गच्छन्तु ] ॥ चूह् गछख् गछुनु [। त्वं गच्छ] ॥ त्वंहि गछिव् गछंनि [। यूयं गच्छत] ॥ बृह् गछ् गछुनु [। अहं गच्छानि] ॥ अंसि गछव् जेनंनि [। वयं जयेम ॥ इत्यादयो वाक्यार्था इच्छार्थे बोध्याः] ॥ अतीतकालिकेषु यथा । ताफ् गंछु करुनु [ । आतपो ऽभविष्यत् ] ॥ कुलि गंछि खसंनि [ । वृक्षा अरुक्ष्यन् ] ॥ चूह् गंछुख् गछुनु [। त्वमगमिष्यः] ॥ त्वंहि गंछिव गछंनि [। यूयमगमिष्यत] ॥ बृह् गंछुस् गछुनु [। अहमगमिष्यम्] ॥ अंसि गंछि बडंनि [। वयमवर्धिष्याम ॥ इति वाक्यार्था आशंसापरा बोध्याः । अतीतकालश्चात्र क्रियातिपत्तौ चांरतार्थः ॥ सर्वेषाम्] साधनं पूर्ववत् ॥

## ॥ भावकर्मणोरनी ॥ ५० ॥

धातोर्भावकर्मणोर्विषये अनी प्रत्ययो भवति ॥ करनी । करणीयम् ॥ पकनी । गमनीयम् ॥ वुथनी । उत्थेयम् ॥ दिनी । देयम् ॥ ह्यनी । क्रेयम् ॥ इः सर्वत्राकारागमो निदिायिवर्जितात् ( सू० ८।२।११ ) इत्यकारागमः । शेषं स्पष्टम् ॥

## ॥ नञो ऽर्थे धातोरनय् ॥ ५१ ॥

धातोः नञ्शब्दस्य अभावस्यार्थे वाच्ये अनय् भवति स चाव्ययम् ॥ करनय् । अकृतम् ॥ गरनय् । अघट्टितम् ॥ परनय् । अपठितम् ॥ पोठनय् । अपुष्टम् ॥ दिनय् । अदत्तम् ॥ ह्यनय् । अक्रीतम् ॥ साधनं सुगमम् ॥

इति शारदाक्षेत्रभाषाव्याकरणे कश्मीरशब्दामृते कृदन्तप्रक्रियायां
कृत्क्रियादिपादः प्रथमः ॥ ९।१ ॥

# अथ कृदन्तप्रक्रियायाम् ॥९॥

## भावपादः ॥२॥

### ॥ भावे ॥ १ ॥

इतः परं ये वक्ष्यमाणाः प्रत्ययास्ते सर्वे भावे विज्ञेयाः ॥

### ॥ पुंस्युन् ॥ २ ॥

धातोर्भावे उन् प्रत्ययो भवति स च पुंलिङ्गे वर्तते ॥ करुन् । करणम् ॥ पठुन् । पठनम् ॥ द्युन् । दानम् ॥ असुन् । हसनम् ॥

### ॥ अंनु [ उनु ] वा ॥ ३ ॥

धातोर्भावविषये अंनु प्रत्ययो वा विकल्पेन भवति सो ऽपि पुंलिङ्गे ॥ च्रंनु । उपचयनम् ॥ जुवंनु । जीवनम् ॥ [ अंनु प्रत्ययस्थाने उनु प्रत्ययव्यवहारो दृश्यते । यथा ९।१ सूत्रेषु २२,२३,४१,४२ इत्यादिषु ] । पक्षे । च्ररुन् । जुवुन् । इति स्वरूपे स्तः ॥

### ॥ तलबज़ोर्यागमो वा ॥ ४ ॥

तल स्नेहपाके । बज़् सेवायां स्नेहने च । इत्यनयोः उन् प्रत्यये परे

विकल्पेन यकारागमो भवति । तत्र बजः स्नेहन एव ॥ तल्युन् । स्नेहपाकः ॥ बज्युन् । स्नेहपाकः ॥ पक्षे । तलुन् । बजुन् ॥

## ॥ मषश्च रब् ॥ ५ ॥

मष विस्मरणे इत्यस्य भावे रब् प्रत्ययो भवति ॥ मष्रब् । विस्मरणम् ॥ पक्षे । मषुन् ॥

## ॥ द्वद्रज्वज़रस्वसरां च उ् ॥ ६ ॥

द्वदर जीर्णीभवने । ज़्वज़र जर्जरत्वे । स्वसर काष्ठादिजीर्णने । इत्येषां भावे उ् प्रत्ययश्च स्यात् ॥ द्वदरु । जीर्णनम् ॥ ज़्वज़रु । जीर्णनम् ॥ स्वसरु । जीर्णनम् ॥ पक्षे । द्वदरुन् । ज़्वज़रुन् । स्वसरुन् ॥

## ॥ छ्वम्बज्वसबगारब्यहलमलोसवुनाम ऽच्च ॥७॥

छ्वम्ब कणमर्दने । ज़्वस कासे । बगार म्रक्षणे । ब्यह उपवेशने । लम आकर्षणे । लोस श्रमे । वुन दैवानार्जवे । एषां भावे अ प्रत्ययश्च भवति ॥ छ्वम्ब । मर्दनम् ॥ ज़्वस । कासः ॥ बगार । म्रक्षणम् ॥ ब्यह । आसनम् ॥ लम । आकर्षणम् ॥ लोस । श्रमः ॥ वुन [। दौभाग्यम्] ॥ पक्षे । छ्वम्बुन् । इत्यादयो भवन्ति ॥

## ॥ लदश्चाव् वेतने ऽपि ॥ ८ ॥

लद वस्तुप्रेषणे गृहादिनिर्माणोर्ध्वान्तरीकरणयोः सूत्रादिकर्मणि च इत्यस्य भावे आव् प्रत्ययश्च भवति ॥ तद्वेतने ऽपि गृहादिनिर्माण एव बोध्यम् । इतरयोस्तु गौणतया ॥ लदाव् । [गृहादि] निर्माणम् । तद्वेतनं च ॥

## ॥ छ्वकवछ्वकटकटुकट्वकठुकत्रुकथकपाकवफुकफ्वकब्रकामुंल्लोपो वा ॥ ९ ॥

छ्वकव जलावगाहने। छ्वक वाङ्नैर्बल्ये। टक शब्दवदन्तैश्छेदने। टुक आखुवच्छेदे। ट्वकव कूटाद्याघाते। ठुक उत्खनने। त्रुक कणशश्छेदने भक्षणे च। थक श्रमे। पाकव पचने। फुक अङ्गारप्रदीपने। ब्रक दंष्ट्राघाते। एषां भावे उन् प्रत्ययस्य लोपो वा भवति ॥ तत्र छ्वको दाहवैदग्ध्ययोः। टकश्छेदन एव। ट्वकवछ्वकवपाकवानामन्त्यस्वरादिलोपः ॥ फुकः फूत्कारे उपधाया वत्वमिष्यते ॥ छ्वख्। जलशोधना ॥ छ्वख्। दाहः वैदग्ध्यं वा ॥ टख्। छेदः ॥ टुख्। छिद्रवच्छेदः ॥ ट्वख्। मृगादिहननम् ॥ ठुख्। उत्खननम् ॥ त्रुख्। कणभक्षणं छेदनं वा ॥ थख्। श्रमः ॥ पाख्। पाकः ॥ फुख्। अङ्गारप्रदीपनम् ॥ फ्वख्। फूत्कारः ॥ ब्रख्। आघातः ॥

## ॥ ड्वगरङ्गसगां गात् ॥ १० ॥

ड्वगव अवखण्डने। रङ्ग रञ्जने। सगव वृक्षादिसिञ्चने। गकारान्तेषु एषां धातूनां भावे उन् प्रत्ययस्य विकल्पेन लोपो भवति। ड्वगवसगवयोर्मूलधातू अनुपलब्धावपि कारितोत्पन्नो व प्रत्ययो ऽनुमीयते। अतः ट्वकवधातुवदत्रापि अन्त्यस्वरादिलोपे गान्तेषु पठितौ ॥ ड्वग्। खण्डनम् ॥ रङ्ग्। रागः ॥ सग्। सेकः ॥

## ॥ वाँचश्चात् ॥ ११ ॥

अप्रसिद्धचवर्गान्तेषु धातुषु वाँच वञ्चने इत्यस्य धातोर्भावे उन् प्रत्ययस्य लोपो वा भवति ॥ वाँछ्। वञ्चनम् ॥

## ॥ च़ेटलूटवाटां टात् ॥ १२ ॥

टकारान्तेषु धातुषु । च़ेटकुट्टने । लूट लुण्ठने । वाट संधापने । इत्येषां भावे उन् प्रत्ययस्य लोपो वा भवति ॥ च़ेद् । कुट्टनम् ॥ लूद् । लुण्ठनम् ॥ वाद् । संधिः ॥

## ॥ गण्डो डात् ॥ १३ ॥

डकारान्तेषु । गण्ड ग्रन्थे । इत्यस्य भावे उन् प्रत्ययस्य लोपो वा भवति ॥ गंद् । ग्रन्थिः ॥

## ॥ खनछ़्यनोर्नात् ॥ १४ ॥

नकारान्तेषु । खन अवदारणे । छ़्यन छेदे । इत्यनयोर्भावे उन् प्रत्ययस्य लोपो वा भवति ॥ खन् । खातः ॥ छ़्यन् । छेदः ॥

## ॥ कांम्पकृपच़ापज़पटपां पात् ॥ १५ ॥

पकारान्तेषु । कांम्प कम्पने । कृप कर्तने । च़ाप अदने । ज़प जपने । टप परोक्षपरिभाषणे । एषां धातूनां भावे उन् प्रत्ययस्य लोपो वा भवति । टपः अश्वाघाते कार्यघाते च ॥ कांम्फ् । कम्पः ॥ कृफ् । कृन्तनम् ॥ च़ाफ् । अदनम् ॥ ज़फ् । जपः ॥ टफ् । अश्वपादादिप्रहारादि ॥

## ॥ ब्रमो मात् ॥ १६ ॥

ब्रम भ्रान्तौ । इत्यस्य मकारान्तेषु धातुषु भावे उन् प्रत्ययस्य लोपो वा भवति ॥ ब्रम् । भ्रान्तिः ॥

## ॥ चारचीरतारफुकारफ्यारमारस्वरां रात् ॥१७॥

रकारान्तेषु धातुषु । चार बलाद्बन्धने । चीर निष्पीडने । तार तारणे । फुकार कोपालापे । फ्यार रसनिष्कासने । मार मारणे । स्वर स्मरणे । इत्येषां भावे उन् प्रत्ययस्य लोपो वा भवति ॥ फुकारः पाकभेदे च । स्वरश्चेष्टायां च ॥ चार् । अतिबन्धनम् ॥ चीर् । निष्पीडनम् ॥ तार् । तारणम् ॥ फुकार् । ऊष्मनिर्गमः ॥ मार् । मारणम् ॥ स्वर् । चेष्टा स्मृतिश्च ॥

## ॥ च़्यलछ़लज़्लतोलदलमेलां लात् ॥१८॥

लकारान्तेषु धातुषु । च़्यल बलात्प्रवेशने । छ़ल छलने । ज़्ल नखैस्तक्षणे । तोल तोलने । दल विदारणे । मेल संगमे । एषां धातूनां भावे उन् प्रत्ययस्य लोपो वा भवति ॥ च़्यल् । बलात्प्रवेशः ॥ छ़ल् । छलम् ॥ ज़्ल् । नखक्षतम् ॥ तोल् । तौल्यम् ॥ दल् । अवखण्डनम् ॥ मेल् । सङ्गः ॥

## ॥ ज़ुवडुवतावव्ह्वां वात् ॥ १९ ॥

वकारान्तेषु । ज़ुव जीवने । डुव संमार्जने । ताव तापने । व्ह्व शापे । इत्येषां भावे उन् प्रत्ययस्य लोपो वा भवति ॥ ज़ुव् । जीवः ॥ डुव् । नाशः ॥ ताव् । तापः ॥ व्ह्व् । शापः ॥

## ॥ रसह्सवोः सात् ॥ २० ॥

रस सरसीभवने । ह्सव श्वादिसूचनायाम् । इत्यनयोर्भावे उन् प्रत्ययस्य लोपो वा भवति ॥ ह्सवो ऽत्रापि पूर्ववद्वकारलोप इष्यते ॥ रस् । रसः ॥ ह्स् । सूचना ॥

## ॥ गृहः सकारो वा ॥ २१ ॥

गृह घर्षणे इत्यस्य भावे उन् प्रत्ययस्य लोपो वा भवति। धातोरन्त्यस्य च विकल्पेन सकारो भवति ॥ गृह् । घर्षणम् ॥ पक्षे । गस् । घर्षणम् ॥

## ॥ चूहश्च ॥ २२ ॥

चूह चूषे इत्यस्य भावे उन्प्रत्ययस्य लोपो वा भवति ॥ चूह् । चूषणम् ॥

## ॥ स्त्रियाम् ॥ २३ ॥

इत उत्तरं ये वक्ष्यमाणाः प्रत्ययास्ते स्त्रियां भावे विज्ञेयाः ॥

## ॥ चरचुवमोरवमर्चां नित्यमिञ् ॥ २४ ॥

चर अन्तःकोपे । चुव कलहे । मोरव पीडासहने । मर्च अमर्षे । इत्येषां भावे नित्यम् इञ् प्रत्ययो भवति स च स्त्रियामेव ॥ चरिञ् । अन्तःकोपः ॥ चुविञ् । कलहः ॥ मोरवूञ् । सहनम् ॥ मर्चूञ् । अमर्षणम् ॥

## ॥ मोरवमर्चखसफिचादिभ्य ऊदादेः ॥२५॥

मोरव पीडासहने । मर्च अमर्षे । इत्याभ्यां परस्य उत्तरसूत्रे वक्ष्यमाणफिचादिभ्यश्च इञ् प्रत्ययस्य आदिस्वरस्य ऊमात्रादेशो भवति॥ मोरवूञ् [। सहनम्] ॥ मर्चूञ् [ । अमर्षणम् ] ॥

## ॥ फिच [ खस ] फुहफुशवजवचुचां वा ॥२६॥

फिच विस्मरणे । [ खस ततूरुहकर्षणे । ] फुह फुश अन्तःकोपे । वजव सार्द्रीकरणे । वुच दग्धी भवने । इत्येषां भावे स्त्रियां विकल्पेन इञ् प्रत्ययो

भवति ॥ फिचूञ्। कार्यविस्मृतिः ॥ [ ख्सूञ्। तनूरुह + + कर्षणम् ॥ ] फुहूञ्। अन्तःकोपः ॥ फ्वशूञ्। अन्तःकोपः ॥ वज़वूञ् [। सार्द्रीभावाय जलादौ स्थापनम् ] ॥ वुचूञ्। दाहः [ अत्रापि क्रोधेनैवान्तर्दाह इव संताप इत्यर्थः ] ॥ पक्षे। फिचुन्। [ ख्सुन। ] फुहुन्। फ्वशुन्। वज़वुन्। वुचुन् ॥

## ॥ सारखुतटुवडुवडलत्रुकथ्यकनच़नटनमवुज़वुठवुपां च ॥ २७ ॥

सार स्वारादिषु। खुत अन्तःखनने। टुव संकोचने। डुव संमार्जने। डल उल्लङ्घने। त्रुक भक्षणे। थ्यक श्लाघायाम्। नच़ नर्तने। नट कम्पे। नम नम्रीभावे। वुज़ जलादिव्यक्तीभावे। वुठ वेष्टने। वुप अन्तर्दाहे। इत्येषां भावे स्त्रियां विकल्पेन इञ् प्रत्ययो भवति ॥ सारिञ्। स्वारः ॥ खुतिञ्। अन्तःखननम् ॥ टुविञ्। संकोचः ॥ डुविञ्। संमार्जना ॥ डलिञ्। प्रवणम् ॥ त्रुकिञ्। कणभक्षणम् ॥ थ्यकिञ्। श्लाघा ॥ नचिञ्। नर्तनम् नर्तकी च ॥ नटिञ्। कम्पः ॥ नमिञ्। नम्रता ॥ वुज़िञ्। जलादेराविर्भावः ॥ वुठिञ्। वेष्टनम् ॥ वुपिञ्। अन्तर्दाहः ॥ तत्र प्रसङ्गागतस्तद्धितोक्तः अलप्रत्ययश्चेञन्तभावादेव व्यवह्रियते नान्यत इति धीमद्भिरवधार्यम्। तद्यथा। थ्यकिञल्। श्लाघी ॥ नटिञल्। कम्पवान्। इत्यादि ॥

## ॥ लिवल्यवोश्च ॥ २८ ॥

लिव लेपने। ल्यव लेहने। इत्यनयोर्भावे स्त्रियां विकल्पेन इञ् प्रत्ययो भवति ॥ लिविञ्। लेपनम् ॥ ल्यविञ्। लेहनम् ॥

## ॥ लिवो वस्य पश्च ॥ २९ ॥

लिव लेपने। इत्यस्य वकारस्य पकारश्च भवति ॥ लिपिञ्। लेपनम् ॥

## ॥ करो लेपकायुधे ॥ ३० ॥

कर करणे । इत्यस्य लेपकायुधे गम्यमाने स्त्रियाम् इञ् प्रत्ययो भवति ॥ करिञ् । लेपकायुधः ॥ भावे करुन् इति पुंलिङ्गमेव भवति ॥

## ॥ वटः संग्रहे ॥ ३१ ॥

वट वेष्टने । इत्यस्य संग्रहार्थे स्त्रियाम् इञ् प्रत्ययो भवति ॥ वटिञ् । संग्रहः ॥

## ॥ फरश्चौरिण्याम् ॥ ३२ ॥

फर स्तेये । इत्यस्य चौरिण्या अर्थे स्त्रियाम् इञ् प्रत्ययो भवति ॥ फरिञ् । चौरिणी ॥

## ॥ च्वकतपलङ्गामिश् ॥ ३३ ॥

च्वक क्रोधे ऽम्लीभवने च । तप औष्ण्योपादाने । लङ्ग पङ्ग्वीभवने । इत्येषां भावे स्त्रियाम् इश् प्रत्ययो भवति ॥ च्वकिश् । क्रोधः ॥ तपिश् । तापः ॥ लङ्गिश् । पङ्गुता ॥

## ॥ मिलवो ऽन्त्यस्य मश्च ॥ ३४ ॥

मिलव संयोजने इत्यस्य भावे इश् प्रत्ययो भवति । अन्त्याक्षरस्य च मकारो भवति ॥ मिलमिश् । संयोगः ॥

## ॥ कपटद्ननह्वावपिलफिरमाज़मिलवमुच़रमूर-ल्यववुठवुह्वामन् ॥ ३५ ॥

कपट कृन्तने । द्रून द्रूनव वस्त्रादिरजोपहरणे । नह्वाव क्रियाघाते । पिल

प्राप्तौ । फिर पुस्तकादिपरिवर्तने । माज़ तत्परतायां शोधने च । मिलव संयोजने । मुच्नर उद्घाटने । मूर त्वचो निष्कर्षे । ल्यव लेहने । वुठ वेष्टने । वुह अनिर्वाणे । इत्येषां भावे स्त्रियाम् अन् प्रत्ययो वा भवति ॥ कपटन् । कृन्तनम् ॥ वुनन् । [वस्त्रादेः] रजोपहरणार्थं कम्पनम् ॥ नहावन् । क्रियाघातः ॥ पिलन् । प्राप्तिः ॥ फिरन् । परिवर्तनम् ॥ माज़न् । शोधना । सा तु धान्यादिक एव व्यवह्रियते ॥ मिलवन् । संयोजना ॥ मुच्नरन् । उद्घाटनम् ॥ मूरन् । त्वङ्निष्कर्षणम् ॥ ल्यवन् । लेहः ॥ वुठन् । वेष्टनम् ॥ वुहन् । अनिर्वाणः ॥

## ॥ गिलवश्चेष्टार्थेऽन्त्यलोपश्च ॥ ३६ ॥

गिलव भ्रामणे । इत्यस्य चेष्टाया अर्थे अन् प्रत्ययो भवति अन्त्याक्षरस्य च लोपो भवति ॥ गिलन् । चेष्टा ॥

## ॥ आंड्रखंण्ड्रछ्वंट्रज़ीठ्रट्वंट्रपीठ्रफुट्रबंड्रबांग्रम्वंट्रवोव्रां च ॥ ३७ ॥

आंड्र मिश्रणे । खंण्ड्र विभाजने । छ्वंट्र ह्रस्वीकरणे । ज़ीठ्र दीर्घीकरणे । ट्वंट्र वृत्तिसंकोचे । पीठ्र सशिक्षं प्रतिक्षेपणे । फुट्र भञ्जने । बंड्र वर्धने । बांग्र विभाजने । म्वंट्र घनीकरणे । वोव्र धातूनां तक्षणे । इत्येषां भावे अन् प्रत्ययो भवति ॥ आंड्रन् । मिश्रणम् ॥ खंण्ड्रन् । खण्डना ॥ छ्वंट्रन् । संक्षेपता ॥ ज़ीठ्रन् । विस्तारः ॥ ट्वंट्रन् । वृत्तिसंकोचः ॥ पीठ्रन् । सशिक्षमुपालम्भः ॥ फुट्रन् । भञ्जनम् ॥ बंड्रन् । वर्धनम् ॥ बांग्रन् । विभागः ॥ म्वंट्रन् । घनता ॥ वोव्रन् । तक्षणम् ॥

## ॥ नव उपधाया वश्च ॥ ३८ ॥

नव नूतनतायाम् । इत्यस्य अन् प्रत्ययो भवति उपधाया अकारस्य वकारश्च भवति ॥ न्वव्रन् । दोषोपचयनम् ॥

## ॥ तंञ्रतंच्रस्यंज्रां च क्वचित् ॥ ३९ ॥

तंञ्र विरलीकरणे । तंच्र तापने । स्यंज्र ऋज्वीकरणे । इत्येषां भावे क्वचित् अन् प्रत्ययो भवति ॥ तंञ्रन् । तनुता ॥ तंच्रन् । तप्तता ॥ स्यंज्रन् । ऋजुता ॥

## ॥ लारः कम्पे ॥ ४० ॥

लार स्पर्शानुगमनस्निग्धीकरणेषु । इत्यस्य कम्पार्थे अन् प्रत्ययो भवति ॥ लारन् । कम्पः ॥

## ॥ चिखिह्यां पुंस्येव ॥ ४१ ॥

चि पाने । खि खादने । हि धारणादिषु । इत्येषां भावे पुंसि अन् प्रत्ययो भवति ॥ च्यन् । पानम् ॥ ख्यन् । अशनम् ॥ ह्यन् । धारणम् ॥

## ॥ कडपांस्रश्रुकामञ् ॥ ४२ ॥

कड निष्कासने । पांस्र धिक्करणे । श्रुक क्रन्दने । इत्येषाम् अञ् प्रत्ययो भवति । तेषां तु नित्यं बहुत्वमेव ॥ कडञ् । धिक्कारः ॥ पांस्रञ् । धिक्कारः ॥ श्रुकञ् । रोदनम् ॥

## ॥ चे़नश्चावागमः ॥ ४३ ॥

च़ेन चेतने । इत्यस्य अञ् प्रत्ययो भवति अव् आगमश्च ॥ च़ेनवञ् । संज्ञापनम् ॥

## ॥ अर्ज़बावव़ुपज़श्रपस्यदगरवटशहलह्यकामत् ॥४४॥

अर्ज़ अर्जने । बाव अभिप्रायाविष्करणे । व़ुपज़ उत्पत्तौ । श्रप जीर्णने । स्यद सिद्ध्यामृज्वीभवने च । गर घट्टने । वट वेष्टने । शहल शीतीभवने । ह्यक शक्तौ । एषां भावे स्त्रियाम् अत् प्रत्ययो भवति ॥ व़ुपज़ो ऽन्त्यस्वरादिलोपश्चेष्यते ॥ वटः संग्रहे ॥ गरः पुंसि च ॥ अर्ज़थ् । अर्जनम् ॥ बावथ् । अभिप्रायाविष्करणम् ॥ व़ुपथ् । उत्पत्तिः ॥ श्रपथ् । अन्नादेर्जीर्णनम् ॥ स्यदथ् । सिद्धिः ॥ गरथ् । घट्टना ॥ वटथ् । संग्रहः ॥ शहलथ् । शीतलता ॥ ह्यकथ् । शक्तिः ॥

## ॥ पोठो ऽक् शक्तौ ॥ ४५ ॥

पोठ स्थूलीभवने । इत्यस्य धनादिशक्त्यर्थे अक् प्रत्ययो भवति ॥ पोठख् । [धनादिसंचयेन] शक्तिः ॥

## ॥ वखनखारज़ागवालनच़क्खामनाम ऽय् ॥४६॥

वखन व्याख्याने । खार आरोहणे । ज़ाग प्रतिजागरणे । वाल अवतारणे । नच़ नर्तने । ह्रख शोषे । आमन वैवर्ण्ये । इत्येषां भावे स्त्रियाम् अय् प्रत्ययो भवति ॥ खारवालोर्निन्दार्थे तयोस्तु अन् आगमो वेष्यते ॥ वखनय् । व्याख्यानम् ॥ खारनय् वा खारय् । आरोहणम् ॥ ज़ागय् । प्रतिजागरणम् ॥ वालनय् वा वालय् । अवतारणम् ॥ नच़य् । नर्तनम् ॥ ह्रखय् । शोषणम् ॥ आमनय् । वैवर्ण्यम् ॥

## ॥ मङ्को दीर्घश्च ॥ ४७ ॥

मङ्क याचने। इत्यस्य भावे अय् प्रत्ययो भवति पूर्ववर्णस्य च दीर्घः स्यात् ॥ माङ्कय्। याच्ञा ॥

## ॥ बांगूरो रलोपश्च ॥ ४८ ॥

स्पष्टम् ॥ बागय्। विभागः ॥

## ॥ ज़ेन उपधाया इदाद्यन्तलोपो ऽपि प्रत्ययधात्वोः ॥४९॥

ज़ेन जये। इत्यस्य अय् प्रत्ययो भवति उपधायाश्च इत्वं भवति प्रत्ययस्य आद्यक्षरस्य धातोश्चान्त्याक्षरस्यापि लोपो भवति ॥ ज़िय्। जयः ॥

## ॥ उदोपपदे साव उन्निद्रतायाम् ॥ ५० ॥

साव शायने । इत्यस्य उदशब्दे उपपदे सति उन्निद्रताया अर्थे अय् प्रत्ययो भवति ॥ उदसावय्। उन्निद्रता ॥

## ॥ केवलात्सुखार्थे ॥ ५१ ॥

साव शायने। इत्यस्मात्केवलात् सुखार्थे अय् प्रत्ययो भवति ॥ सावय्। सुखम् ॥

## ॥ होपपदे आमनो मिथ्याभियोगे ॥ ५२ ॥

आमन वैवर्ण्ये। इत्यस्य हशब्दे उपपदे सति मिथ्याभियोगार्थे अय् प्रत्ययो भवति ॥ हामनय्। मिथ्याभियोगः ॥

## ॥ लागो ऽनय् कृष्यर्थे ॥ ५३ ॥

स्पष्टम् ॥ लागनय् । कृषिः ॥

## ॥ बांग्रो रलोपश्च ॥ ५४ ॥

स्पष्टम् ॥ बागनय् । विभागः ॥

## ॥ सादो निमित्ते ॥ ५५ ॥

स्पष्टम् ॥ सादनय् । मुख्यहेतुः ॥

## ॥ छकछिकचमकट्कफूँकशैँकामिञो लोपः ॥५६॥

छक कीर्णने । छिक सेचने प्रमेहने च । चमक दीप्तौ । ट्क धावने । फूँक आघ्राणे । शैँक शङ्कायाम् । इत्येषां धातूनां भावे इञ् प्रत्ययस्य लोपो भवति ॥ छख् । कीर्णनम् ॥ छिख् । सिञ्चनम् ॥ चमख् । दीप्तिः ॥ ट्ख् । धावनम् ॥ फूँख् । आघ्राणम् ॥ शैँख् । शङ्का ॥

## ॥ ज़ागटाँगदगमङ्गलगलागवुङ्गश्वङ्गां गात् ॥५७॥

गकारान्तेषु धातुषु । ज़ाग प्रतिजागरे । टाँग घोरवाशिते । दग घातने । मङ्ग याचने । लग सङ्गे पीडायां संगतीभवने च । लाग अनुकरणादिषु । वुङ्ग श्वरवे । श्वङ्ग शयने । इत्येषां धातूनां भावे इञ् प्रत्ययस्य लोपो भवति ॥ ज़ाग् । अवेक्षा ॥ टाँग् । घोरवाशितम् ॥ दग् । घातः ॥ मङ्ग् । याच्ञा ॥ लग् । सङ्गः ॥ लाग् । नियमाल्लगनम् ॥ वुङ्ग् । श्वादिरवः ॥ श्वङ्ग् । निद्रा ॥ वुङ्गस्तु अकारान्तस्वरूपं मनुष्याणां चिन्तया रात्रिक्षेपे चेति ॥ [ वुङ्ग ] ॥

## ॥ पचरोचश्रोचां चात् ॥ ५८ ॥

अप्रसिद्धचकारान्तेषु । पच ऋणादिविश्वासे । रोच रोचने । श्रोच शुद्धौ । इत्येषां धातूनां भावे स्त्रियाम् इञ् प्रत्ययस्य लोपो भवति ॥ पच् । विश्वासः ॥ रुच् । रुचिः ॥ श्रोच् । शौचः ।

## ॥ इछप्रिछोश्छात् ॥ ५९ ॥

इछ इच्छायाम् । प्रिछ पृच्छायाम् । अनयोरप्रसिद्धछकारान्तेषु इञ् प्रत्ययस्य लोपो भवति ॥ इछ् । इच्छा ॥ प्रिछ् । पृच्छनम् ॥ द्वितीयस्योदाहृतिर्यथा । प्रिछ् प्यौव् । पृच्छनयोग्यः संपन्नः ॥ यथा च । प्रिछ-गांरू कंरूनस् । पृच्छनादिका रचिता तस्य ॥

## ॥ दून्छूरो ऽन्त्यव्यञ्जनलोपः ॥ ६० ॥

दून्छूर् पृथक्पृथक्करणे । इत्यस्य भावे इञ् प्रत्ययस्य लोपो भवति अन्त्यव्यञ्जनस्य च लोपो भवति ॥ दून्छ् । पृथक्पृथक्करणम् ॥

## ॥ तछमन्दछरछां छात् ॥ ६१ ॥

प्रसिद्धछकारान्तेषु धातुषु । तछ तक्षणे । मन्दछ मन्दाक्षे । रछ रक्षायाम् । इत्येषां भावे इञ् प्रत्ययस्य लोपो भवति ॥ तछ् । कण्डूः ॥ मन्दछ् । लज्जा ॥ रंछू । रक्षा ॥

## ॥ तछ ऊमात्रागमो वा ॥ ६२ ॥

स्पष्टम् ॥ तंछू । कण्डूः ॥

## ॥ रछो नित्यम् ॥ ६३ ॥

अस्य नित्यम् ऊमात्रागमः स्यात् न तु विकल्पेन ॥ रछू । रक्षा ॥

## ॥ ग्रज़ो ज़ात् ॥ ६४ ॥

ज़कारान्तेषु धातुषु । ग्रज़ गर्जने । इत्यस्य इञ् प्रत्ययलोपो भवति ॥ ग्रज़् । गर्जनम् ॥

## ॥ चूँटछ़टफुटां टात् ॥ ६५ ॥

चूँट अपानशब्दे । छ़ट उत्क्षेपणे । फुट भङ्गे । इत्येषाम् इञ् प्रत्ययलोपो भवति ॥ चूँट् । पर्दनम् ॥ छ़ट् । उत्क्षेपनम् ॥ फुट् । बलिः ॥

## ॥ ख्यठः प्रयोजने ॥ ६६ ॥

ख्यठ तिक्तीभवने । इत्यस्य प्रयोजनार्थे इञ् प्रत्ययलोपो भवति ॥ ख्यठ् । प्रयोजनम् ॥

## ॥ माँडवड्रोर्डात् ॥ ६७ ॥

माँड मिश्रीकरणे । वड्र निक्षेपे । इत्यनयोरिञ् प्रत्ययलोपो भवति ॥ माँड् । मिश्रणम् ॥ वड्रो ऽन्त्यव्यञ्जनलोप इष्यते ॥ वड् । उत्कोचः ॥

## ॥ छ़ाँड ऊमात्रागमो वा ॥ ६८ ॥

छ़ाँड अन्वेषणे । इत्यस्य ऊमात्रा आगमो वा स्यात् ॥ छ़ाँड् वा छ़ाँडू ॥ अन्वेषणम् ॥

## [ ॥ छाडो नित्यम् ॥ ६८ क ॥

छाड अन्वेषणे । इत्यस्य धातोः स्त्रियां भावे इञ् प्रत्ययलोप ऊमात्रागमश्च नित्यं भवति ॥ छाडू । अन्वेषणम् ॥]

## ॥ न्यतलतोस्तात् ॥ ६९ ॥

न्यत पशुरोमकृन्तने । लतव लत्ताघाते । इत्यनयोः इञ् प्रत्ययलोपः स्यात् । लतवो वकारस्य च लोप इष्यते ॥ न्यथ् । पशुरोमकृन्तनम् ॥ लथ् । लत्ताघातः ॥

## ॥ पद्प्यद्प्वन्दां दात् ॥ ७० ॥

पद कुत्सिते शब्दे । प्यद वृत्तज्ञतायाम् । प्वन्द क्षुते । एषां भावे इञ् प्रत्ययस्य लोपः स्यात् ॥ पद् । पर्दनम् ॥ प्यद् । वृत्तज्ञता ॥ प्वन्द् । क्षुतम् ॥

## ॥ आमनज़ानोर्नात् ॥ ७१ ॥

आमन वैवर्ण्ये । ज़ान अवबोधने । इत्यनयोर्भावे इञ् प्रत्ययस्य लोपो भवति ॥ आमन् । आमता ॥ ज़ान् । ज्ञानम् ॥

## ॥ छानदोनोरूदागमश्च ॥ ७२ ॥

छान उत्पवने शातने च । दोन पिचुवद्विवरणे । अनयोः इञ् प्रत्ययस्य लोप ऊमात्रागमश्च भवति ॥ छांञू । उत्पवनम् ॥ दूञू । पृथक्पृथक्करणम् ॥

## ॥ ञ्चापः पात् ॥ ७३ ॥

ञ्चाप अदने । इत्यस्य इञो लोपो भवति ॥ ञ्चाफ् । अदनम् ॥

## ॥ वुफः फात् ॥ ७४ ॥

वुफ विहायसा गतौ । इत्यस्येञो लोपो भवति ॥ वुफ् । उड्डीतिः ॥

## ॥ लेखो ऽन्त्यस्य च फः ॥ ७५ ॥

लेख लेखने । इत्यस्य इञ् प्रत्ययलोपो भवति अन्त्यस्य खकारस्य च फकारः ॥ लेफ् । लिपिः ॥ शास्त्रदर्शिनां मते एवायं प्रयोगः ॥

## ॥ रम्बशूबोर्बात् ॥ ७६ ॥

रम्ब शोभायाम् । शूब शोभायाम् । बान्तेष्वनयोः इञ् प्रत्ययस्य लोपो भवति ॥ रम्ब् । शोभा ॥ शूब् । शोभा ॥

## ॥ प्रयो यात् ॥ ७७ ॥

प्रय प्रीणने । इत्यस्येञो लोपो भवति ॥ प्रय् । प्रीतिः ॥

## ॥ आवरडंख्र्तूंरथाँथरदोरमूरलारसखरां रात् ॥ ७८ ॥

रकारान्तेषु । आवर व्यापने आवरणे च । डंख्र् आधारीकरणे । तूंर शीतलीभवने । थाँथर त्वरायाम् । दोर गतिचातुर्ये । मूर त्वचो निष्कर्षे भक्षणे च । लार स्पर्शानुगमनास्निग्धीकरणेषु । सखर प्रस्थाने । इत्येषां भावे इञ् प्रत्ययस्य लोपो भवति ॥ [ आवरडंख्र्तूंरामूमात्रागमश्च बोध्यः ॥ ] आवंरू । आवृतिः ॥ डंख्रू । आधारः ॥ तूंरू । शीतम् ॥ थाँथर् । [सभयं]

त्वरा ॥ दोर् । धावनम् ॥ मूर् । निष्कर्षणम् ॥ ढार् । पलायनम् ॥ सखूर् । प्रस्थानम् ॥ [मूरो ऽनूच । मूरन् ॥]

## ॥ थारबाँबरसारहंन्द्रामूदागमश्च ॥ ७९ ॥

थार त्वरायाम् । बाँबर त्वरायाम् । सार स्वारैकत्रीभवनक्रमानयनेषु । हंन्द्र शीतीभवने । एषां भावे इञ् प्रत्ययस्य लोपो भवति ऊमादागमश्च स्यात् ॥ थारू । [सभयं] त्वरा ॥ बाँबरू । त्वरा ॥ सारू । स्वारः ॥ हंन्द्रू । शीतम् ॥

## ॥ गाँगलटालतम्बलम्वकलवूललशहलां लात् ॥८०॥

गाँगल ग्राँगल परैश्चाश्चल्ये । टाल उपेक्षागमने । तम्बल चाश्चल्ये । म्वकल मुक्तौ । वूलल अलंकरणे । शहल शीतीभवने । लकारान्तेषु एषां धातूनां भावे इञ् प्रत्ययस्य लोपो भवति ॥ गाँगल् वा ग्राँगल् । चश्चलता ॥ टाल् । उपेक्षागमनम् ॥ तम्बल् । चाश्चल्यम् ॥ म्वकल् । मुक्तिः ॥ वूलल् । वेशः ॥ शहल् । शीतलता ॥

## ॥ दवो वात् ॥ ८१ ॥

दव शीघ्रगतौ । इत्यस्य भावे इञ् प्रत्ययस्य लोपो भवति ॥ दव् । शीघ्रगतिः ॥

## ॥ वेतनार्थे धातोर्वञ् ॥ ८२ ॥

क्रियाया वेतने गम्यमाने सति धातोर्भावे स्त्रियां वञ् प्रत्ययो भवति ॥ करवञ् । कर्मवेतनम् ॥ परवञ् । पाठवेतनम् ॥ लोनवञ् । लवनवेतनम् ॥ रोज़वञ् । स्थितिवेतनम् ॥

## ॥ व्यञ्जनान्तादकारागमः ॥ ८३ ॥

व्यञ्जनान्ताद्धातोरकारागमो भवति उदाहरणानि पूर्वसूत्रे ( ८२ ) उक्तानि ॥

## ॥ स्वरान्ताद्वः ॥ ८४ ॥

स्वरान्ताद्धातोः वकारागमो भवति ॥ दिववञ् । दानवेतनम् ॥ निववञ् । हरणवेतनम् ॥ रुयववञ् । भुक्तिवेतनम् ॥ च्यववञ् । पानवेतनम् ॥

## ॥ छानद्वसिल्भ्यां वय् ॥ ८५ ॥

छानशब्द-द्वसिल्शब्दाभ्यां तयोर्वेतने गम्यमाने वय् प्रत्ययो भवति ॥ छानवय् । तक्षवेतनम् ॥ द्वसिल्वय् । लेपकवेतनम् ॥

## ॥ नावो वलोपश्च ॥ ८६ ॥

नाव् शब्दात्तद्वेतने अभिधेये वय् प्रत्ययो भवति वकारस्य च लोपो भवति ॥ नावय् । आतरः ॥

## ॥ बार उपधाऽप्रसिद्धता ॥ ८७ ॥

बार्शब्दात्तद्वेतने वाच्ये वय् प्रत्ययो भवति उपधायाश्चाप्रसिद्धता । तदप्रसिद्धत्वे सिद्धे । व्यञ्जनान्तात् ( सू० ८३ ) इत्यादिसूत्रेणोक्ताकारागमस्य च ऊमात्रादेशो ऽवगन्तव्यः ॥ बारूवय् । भारवेतनम् ॥

## ॥ क्रेयाद्वरु शिल्प्यर्थे ॥ ८८ ॥

[ स्त्रियामिति निवृत्तम् ] शिल्पिनः अर्थे तस्य [ वि ]क्रेयाद्वस्तुनः गंढ

प्रत्ययो भवति ॥ लायगरु । लाजाविक्रेता ॥ गंडन्गरु । पुस्तकसंदर्भी ॥ कङ्गञ्गरु । कङ्कतिकाविक्रेता ॥ मण्डन्गरु । और्णमर्दकः ॥ एवमन्येषां रूढपदव्यतिरिक्तानां पदानां बोध्यम् । यथा स्वनूर् इति स्वर्णकारस्य रूढिः तस्य स्वनगरु इति न भवति ॥

## ॥ दाञ् आदेर्डः ॥ ८९ ॥

दाञशब्दात् क्रेयाद्वस्तुनः शिल्प्यर्थे गरु प्रत्ययो भवति । आद्यक्षरस्य दकारस्य डकारो भवति । उत्तरपदे परे तु ञकारस्यानुस्वारः पूर्वं (सू० ३ । ८) सिद्ध एव ॥ डाँगरु । धान्यविक्रेता ॥

## ॥ योग्यार्थे लगो हार् ॥ ९० ॥

लग सङ्गे पीडायां च । इत्यस्मात् हार् प्रत्ययो भवति योग्यार्थे ॥ लगहार् । योग्यः ॥

## ॥ धातोस्तद्योग्यार्थेऽनागमश्च ॥ ९१ ॥

तस्य धातोः क्रियाया योग्यत्वे अभिधेये सति हार् प्रत्ययो भवति अनागमश्च स्यात् ॥ करन्हार् । करणयोग्यः ॥ गण्डन्हार् । ग्रन्थनयोग्यः ॥

## ॥ स्वरादागमः स्वरवृद्धः ॥ ९२ ॥

स्वरान्ताद्धातोः अन् आगमः स्वरवृद्धः स्वरेण अकारेण वृद्धः भवति अर्थात् अन आगमो भवति ॥ ख्यनहार् । खादनयोग्यः ॥ च्यनहार् । पानयोग्यः ॥ ह्यनहार् । धारणयोग्यः ॥ तत्र न्यादिभ्यस्त्रिभ्य आगमादिवर्णलोप इष्यते ॥ निनहार् । हरणयोग्यः ॥ यिनहार् । आगमनयोग्यः ॥ दिनहार् । दानयोग्यः ॥

इति शारदाक्षेत्रभाषाव्याकरणे कश्मीरशब्दामृते कृदन्तप्रक्रियायां भावपादो द्वितीयः ॥९२॥ कृदन्तप्रक्रिया समाप्ता ॥ ९ ॥

समाप्तं चेदं कश्मीरशब्दामृतं नाम व्याकरणम् ॥

निष्प्रत्यूहनिरर्गलत्वविधये योगं जुषद्भ्यामिव
संप्रीत्या विषये[1] ऽत्र पण्डितपटुः प्रोद्भावितो ऽहं पुरा ।
तत्पादाभ्युपपासितः खलु सरस्वत्या[2] गणेशेन[3] च
ग्रन्थं नूतनमेव पूर्तिमनयं सच्छाब्धिकोल्लासनम् ॥ १ ॥
वेदव्याकरणे किल त्रिनयनाभ्यस्ते च सारस्वत
ऐन्द्रे सादर ऐन्दवे सुमनसां यो बाहुलेये ऽपि च ।
प्रीत्या ईश्वरकौल ईशनिरतः कश्मीरशब्दामृतं
सद्वर्षे सुतिथौ शुभोडुनि शुभे घस्रे च मासे व्यधात् ॥ २ ॥
दोषाच्छादनकृन्मर्त्यः किल देवप्रियो भवेत् ।
स देवानां प्रियो यस्तु दोषाच्छादनकृद्भवेत् ॥ ३ ॥

इति श्रीकश्मीरमण्डलान्तर्मध्यनगरवर्तिसिद्धलक्ष्म्युपचितप्राशस्त्यवितस्ताकमलाप्लावितक्रीडामठप्रदेशनिवासिनेश्वरकौलेनैषा शारदाक्षेत्रभाषाव्याकृतिः कश्मीरशब्दामृताख्या यथामति विस्तरतां नीता ॥ शुभाय भवतु वाचकश्रोतृपाठकानामोम् ॥

भद्रं पश्येम प्रचरेम भद्रम् । समाप्तं चेदं साङ्गं शब्दशास्त्रम् ।

---

(१) [1] विषये देशे च [2] सरस्वत्या देवतया तन्नाम्न्या मात्रा च ।
[3] गणेशेन देवेन तन्नाम्ना पित्रा च ॥

(२) वेदेति इदं पद्यं ग्रन्थारम्भ एव व्याख्याय प्रकाशितम् ॥

[३ । दोषेति दोषाणामाच्छादनं गोपनं शोधनं च करोतीति दोषाच्छादनकृत् तादृशो मर्त्यो देवप्रियो देवस्य प्रकाशात्मनो ज्योतिःस्वरूपस्येश्वरस्य प्रियो भवति ईश्वरस्तं प्रति प्रसन्नो भवतीत्यर्थः । यस्तु दोषाच्छादनकृत् दोषाणामाच्छादनं वस्त्रतुल्यं कृन्तति छेदयतीति स देवानां प्रियो ( देवानां प्रिय इति च मूर्खे पा० सू० ६। ३। २१ स्थ— वार्तिकोक्त्या ) मूर्खः पापी च भवतीत्यर्थः ॥ ]

# अथाकारादिवर्णान्तक्रमेण धातुपाठसूची ।



खि . चि . ज़ि . दि . नि . पि . यि . हि ॥

खिस्क . ग्रक . चमक . च्वक . छक . छिक . [छ्वक] . टक . टुक . ट्रक . ठाक . ठीक . ठुक . डक . ड्वक . त्रुक . थक . थ्यक . थ्वक . द्रक . निक . पक . फक . फुक . फूँक . फ्रक . बक . ब्रक . लोक . व्वक . शेंक . श्वक . सुक . ह्यक ॥

जख . लख . लिख . लेख़ . समख . ह्वख ॥

ड़यङ्ग . ज़ाग . टाँग . ठग . तग . तङ्ग . दग . द्वग . फाँग . बूग . मङ्ग . रङ्ग . लग . लङ्ग . लाग . वुङ्ग . व्वङ्ग . श्वङ्ग . स्वग . स्वग . हग ॥

खरच . बच ॥

अच़ . क्च़ . खोच़ . ग्रच़ . च़र्च़ . च्वच़ . छ्वच़ . तच़ . नच़ . पच़ . फिच़ . मर्च़ . म्वच़ . रोच़ . ल्यच़ . वाँच़ . व्यच़ . वुच़ . श्रोच़ . ह्वच़ ॥

काँछ . तछ . बुछ . बेछ . मन्दछ . मुछ . रछ . वुछ . ह्यछ ॥

अछ़ . इछ़ . गछ़ . मिछ़ . ब्रिछ़ ॥

माँज ॥

अर्ज़ . कन्ज़ . खून्ज़ . ग्रज़ . तेज़ . दज़ . न्यवाज़ . पज़ . पलज़ . पाज़ . पूज़ . प्रिन्ज़ . बज़ . बावज़ . बुज़ . बोज़ . ब्रज़ . माज़ . रन्ज़ . रोज़ . लज़ . वज़ . वुज़ . वुपज़ . सपज़ . सोज़ ॥

कपट . काँट . कुंट . क्रट . खट . गुरट . ग्यमट . चॆट . चूँट . चॆट . छ्रट . छाँट . छ्चट . छ्वट . दृट . डाँट . नट . पट . पलट . पिट . पीट . प्रखट . पाट . फट . फुट . म्वट . रट . रोट . लूट. वट . वाट . वुट . हट ॥

काठ . कुठ . क्रेठ . चमठ . ज़ेठ . ट्यठ . टाठ . ड्रेंठ . नाँठ . पठ . पोठ . ब्रेठ . मेठ . व्यठ . वुठ . शिठ . श्रिठ . हाँठ ॥

अड . कड . गण्ड . छ्ण्ड . छाड . छाँड . ताड . पेड . बड . बुड . बूड . मण्ड . माँड . म्वण्ड . रड . लड . ल्यड . वुड . सड . ह्यड ॥

तूरण . प्राण . मिण . रण . वुष्ण ॥

कत . खुत . छत . ज़ोत . तत . न्यत . मत . रत . ल्वत . वात . वुन्नत . श्रुत . स्वत . सत ॥

पाथ . मथ . वुथ ॥

अन्द . आरद . गुन्द . गिन्द . तुन्द . थद . पद . प्यद . पुन्द . बाद. ब्राद . मन्द . लद . वद . वन्द . व्यन्द . वुद . सपद . साद . स्यद ॥

श्वद्ध ॥

अन . आछ्न . आन . आमन . कान . कुंद्दन . कून . क्यन्न . खन . गन . गुमन . चान . चॆन . छन . छान . छाँछ्न . छ्यन्न . छुन . छ्वन्न . ज़ान . ज़ेन . टूसन . तन . तीलन . दोन . दून . नन . पछान . पर्जन . पाकन . पिलन . पुचन . पुन . प्रज़न . प्रन . फान . बन . बसन . बाखन . ब्यन्न . मान . मुन . मेन . रन . लहन . लुन . लोन . लूहन . वखन . वन .

व्यछून . व्रगन . वुन . वोन . शिगून . सन . सपन . स्यन्न . हान . हामन . होन . हून ॥

काम्प . कुप . कूप . खप . गुप . चाप . छप . जप . टप . ट्यप . तप . त्रप . थिप . दप . नप . नॉप . पप . पष्प . याप . व्याप . वुप . श्रप . हप ॥

वुफ ॥

कब . ग्वब . चुम्ब . छुम्ब . ट्यम्ब . डुब . त्यम्ब . त्वम्ब . त्रुम्ब . [निब.] फब . रम्ब . लब . लूब . शूब ॥

खम . गर्म . चम . चुम . थम . दम . नम . ब्रम . लम . वाम . वुम . शम . सम . हम . हुम ॥

काय . द्रुय . दूय . पय . प्रय . बिय . लय . लाय . ल्य . वय . वाय . वुय ॥

अंदुर . अंन्ज़र . अंबर . अलर . आंज़र . आँट्र . आंड्र . आपर . आवर . ईर . कतर . कंन्ज़र . कर . कहर . काचर . कायर . कार . काव्र . कूर . कूर . खंण्ड्र . खर . खार . खुखर . खोर . गंन्ज़र . गर . गार . ग्रांश्र . गीर . गेर . गोर . गोवर . चर . चर . चार . चार . च्यंत्र . चीशर . चीर . चुकर . चूर . चाँखर . छंक्र . छर . छर . छ्यंट्र . छिन्द्र . छ्यंव्र . छ्वस्र . छंद्र . छ्वप्र . छेर . छोर . जर . ज़र . ज़िङ्गर . ज़ीद्र . ज़्वङ्गर . ज़्वजर . ज़ुव्र . जूर . ज़ोव्र . ज़जर . ठहर . डंख्र . डर . तंच्र . तंस्र . तर . तार . तीज़्र . तूर . तोवर . त्रकर . त्रुप्र . त्रोर . थंज़र . थर . थाँथर . थार . थुर . दर . दर्र . दांस्र . दार . द्रदर . द्वर . दुन्छर . दूर . दोर . नंस्र . नांश्र . निक्र . न्वंम्र . न्वंव्र . नेर .

नोमुर . पंज़र . पंज़्र . पंद्र . पर . पार . पांसुर . प्यतर . पीठ्र . पीर .
पुश्र . पूठ्र . पूर . पैर . पोर . प्रार . फर . फंस्र . फहर . फांस्र . फिर .
फुकार . फुट्र . फेर . फोर . फ्यार . बगार . बंड्र . बंज़्र . बर . बंल्र .
बहर . बांग्र . बांज़्र . बाँबर . बिगर . ब्यंग्र . ब्रंम्र . मठार . मंज़्र .
मर . मर . मंघ्र . महार . मार . मुचर . म्वंट्र . म्वंण्ड्र . म्वंद्र . मुसर .
मूंछ्र . मूँत्र . मूर . मोर . यंत्र . यार . येर . रंछ्र . रावर . लतार .
लार . ल्यंद्र . लूर . लोर . वंड्र . वथर . वर . वहार . वार . विचार .
व्यंज़्र . व्यंग्र . व्यंठ्र . व्यंद्र . व्यंप्र . व्यलर . व्यंब्र . व्यसर . वुक्र .
वुखर . वुथर . वुदर . वुफर . वुबर . वुर . वुसर . वोर . वोब्र . शूब्र . शेर .
सखर । संग्र . संज़्र . सन्दर . सन्दार . सर . साँगर . सार . स्यंज़्र .
स्यंन्द्र . सीर . स्वंम्ब्र . स्वर . स्वसर . सोर . हकर . हंट्र . हंन्द्र .
हर . हहर . हार . हंख्र . हंब्र . हंम्र . हांर . ह्र ॥

अल . अहल . कल . कुमल . कोल . खल . खोल . गल . गाँगल .
गाल . गेल . ग्रांगल . चल . चाल . च्यखल . च्यल्ल . छल . छ्ल . छ्वकल .
ज़ल . ज़ाल . ज़्ल . टल . टाल . डल . डाल . ड्यल . ड्वल . डोल .
तम्बल . तल . ताल . तुल . तेल . तोल . थल . दल . न्यङ्गल . नील .
पल . पाल . पिल . पिशल . पुल . प्रज़ल . फल . फाँफल . फ्लु . बल .
बोल . ममल . मल . म्वकल . मेल . ल्वल . वल . वाल . विगल . वुज़ल .
वुतल . वुलल . वुशल . वोल . शहल . संबाल . हल . हाँकल . हिल . ह्ल ॥

अंद्राव . अंन्ज़्राव . अवसाव . अंब्राव . अपांव . अलराव . आंड्राव .
आपराव . आयव . आरव . आलव . आवराव . कंन्ज़्राव . कपटाव .
कमनाव . कमव . कौँकव . कूचव . काव . खंण्ड्राव . खुललाव . गंन्ज़्राव .

गिलव . ग्यव . गुज़राव . गुलव . ग्रांश्राव . चताव . चाव . चीज़्राव . चुकाव .
चुक्राव . चग्नाव . चंम्राव . चुव . छंक्राव . छंच्राव . छाव . छ्यंट्राव . छिव .
छिव्राव . छयव . छ्यंव्राव . छ्वकव . छंग्राव . छंद्राव . छंय्राव . ज़ीठ्राव .
जुव . जुव्राव . ज़ोव्राव . ज़्रव . टुव . ट्वकव . ठगाव . डखव . डंख्राव .
डुलनाव . डुलव , डुव . तंच्राव . तंस्राव . तव . ताव . तीज़्राव . तोवराव .
त्रकराव . त्रंग्नाव . त्रंच्राव . त्रंस्राव . त्राव . त्र्वम्बव . त्रंग्राव . थंज़्राव . थव .
थाव . दंद्राव . दबव . दव . दांस्राव . दाव . द्वगव . द्वग्नाव . द्वद्राव . द्वब्राव .
दून्छ्राव . दूनव . द्वंग्राव . दूष्राव . नंस्राव . नंट्राव . नव . नहाव .
नाव . नांश्राव . निक्राव . न्वंम्राव . न्वंव्राव . नेछव . नोम्राव .
न्याव . पछताव . पंज़्राव . पंज़्राव . पटाव . पंद्राव . परखाव . पर्ज़नाव .
पाकव . पाव . पांस्राव . पिट्राव . पिलनाव . प्यव . पीठ्राव . पीनव .
पुश्राव . पूठ्राव . पोरव . प्रज़नाव . प्राव . फर्काव . फालव . फांस्राव .
फ्यछव . फिरव . फुट्राव . बंच्राव . बडाव . बंड्राव . बंद्राव . बंन्ज़्राव
बर्काव . बंल्राव . बांग्राव . बांज़्राव . बाव . ब्यंस्राव . ब्वव . ब्रंम्राव .
मंच्राव . मनव . मंन्ज़्राव . मर्दाव . मंष्राव . मांस्राव . मिलनाव . मिलव .
मुछराव . म्वंट्राव . म्वंण्ड्राव . म्वंद्राव . म्वलव . मुसराव . मून्छ्राव .
मूँत्राव . मोरव . यंत्राव . रंछ्राव . रन्ज़नाव . रन्ज़व . राव . रावराव .
रिन्ज़व . रिव . रुव . र्‌कव . लटाव . लडाव . लतव . ललव . लिथव .
ल्यंद्राव . लिव . ल्यव . लूक्राव . वज़व . वंड्राव . वथराव . वनव . वव .
वहाराव . व्यंज़्राव . व्यंस्राव . व्यंठ्राव . व्यंद्राव . व्यंप्राव . व्यव .
व्यंव्राव . वुक्राव . व्वखराव . वुग्राव . वुडाव . व्वथराव . वुसराव .
व्वहव . वोव्राव . शस्राव . शूव्राव . सगनाव . सगव . संस्राव . सताव .

सन्दराव . साव . स्यंज़्राव . स्यंञ्गाव . सिव . स्वखनाव . स्वखव . स्वग्राव . स्वच़्राव . सुरव . सुलव . सुव . स्रव . स्वंग्राव . हंद्राव . हंन्द्राव . हाँद्राव . हाव . हंख्राव . हंच़्राव . हंत्राव . हंस्राव . ह्सनाव . ह्सव ॥

कश . केश . व्रुश . नश . पश . फ्यश . फुश . ( फ्वश ) फेश . ब्रश . शाश . स्वर्श ॥

डेष . तोष . द्रुष . पोष . बाष . मष . मुष . रोष . वष . शष ॥

अवस . अस . आवस . आस . कस . कास . खस . ख्स . च़स . ज़्वस . द्स . ठास . डस . त्रस . दस . पिस . प्रस . फस . बस . बास . मुस . रस . र्स . लस . लिस . लोस . वस . विस . व्वस . व्लस . व्स . स्स ॥

क्रुह . खह . ग्वह . ग्ह . च़्ह . पिह . फह . ब्यह . मुह . ल्ह . व्रुह . स्ह ॥

इति शारदाक्षेत्रभाषाव्याकरणे कश्मीरशब्दामृते
अकारादिवर्णान्तक्रमेण धातुपाठ-
सूचीपत्रं समाप्तम् ॥

# अथाकारादिक्रमेण सूत्रसूची ।

इति श्रीशारदाक्षेत्रभाषाव्याकरणे कश्मीरशब्दामृते

अकारादिक्रमेण सूत्रसूचीपत्रं

समाप्तम् ॥

# अकारादिक्रमेणोदाहरणसूची ।

करान् छ्यखनय् ८ । १ । १६
करान् छ्यखना ८ । १ । १६
करान् छ्यत्या ८ । १ । १४
करान् छिथ् ८ । १ । ३७
करान् छिन ८ । १ । १३
करान् छ्यन ८ । १ । १३
करान् छ्यना ८ । १ । १४
करान् छिम् ८ । १ । ४१
करान् छिय् ८ । १ । ४०
करान् छ्यय् ८ । १ । १८
करान् छिव ८।१।१२–८।१।१९–८ । १ । ४१
करान् छ्यव ८ । १ । १२
करान् छिवख् ८ । १ । २६
करान् छ्यवनय् ८ । १ । १६
करान् छ्यवना ८ । १ । १६
करान् छिवम् ८ । १ । ४१
करान् छ्यवय् ८ । १ । १६
करान् छिवस् ८ । १ । ३६
करान् छिवा ८ । १ । १९
करान् छिस् ८।१।३३–८।१।३६
करान् छ्यस् ८ । १ । १२
करान् छ्यस ८ । १ । १७
करान् छ्यसय् ८ । १ । १७

करान् छिह् ८।१।१२
करान् छ्यह् ८ । १ । १२
करान् छिह् अस्य ८ । १ । ४४
करान् छुख् ८। १। १२—८ । १ । १९—८ । १ । ३९
करान् छुखा ८ । १ । १९
करान् छुन ८।१।१३—८।२।१६
करान् छुना ८ । १ । १४
करान् छुम् ८ । १ । ४१
करान् छुय् ८ । १ । ४०
करान् छुव ८ । १ । ४१
करान् छुस् ८ । १ । १२—८ । १ । ३३—८ । १ । ३६
करान् छुस ८ । १ । १९
करान् छुसख् ८ । १ । ३९
करान् छुसथ् ८ । १ । ३७
करान् छुसय् ८ । १ । ४०
करान् छुसव ८ । १ । ४१
करान् छुसस् ८ । १ । ३३
करान् छुसा ८ । १ । १९
करान छुह् ८।१।१२—८।१।१६
करान् छुह् अस्य ८ । १ । ४४
करान् छुहख् ८ । १ । ३८
करान् छुहम् ८ । १ । ४१

इति श्रीशारदाक्षेत्रभाषाव्याकरणे कश्मीरशब्दामृते अकारादिवर्ण-
क्रमेणोदाहरणसूचीपत्रं समाप्तम् ॥

# अथ गणपाठः ।

तत्रादौ ॥

## कथादयः ॥ २।१।२५ ॥

कथ् । वथ् । व्यथ् । लथ् । दथ् । स्वथ् । व्रथ् । चित्थ् । चैंथ् । गृथ् । पाँथ् । तोंथ् । इति कथादयः ॥

## कछलादयः ॥ २।१।७४ ॥

कछलु । चुतलु । चकुलु । ग्वगुलु । वातुलु । बतुकु । गगुरु । म्वंगुरु । इत्यादयः कछलादयः ॥

## कुचादयः ॥ ८।४।१७ ॥

कुच आर्द्रीभवने । ग्वह दीप्तौ । ग्रक चाञ्चल्यपाकातिशययोः । ज्ञोत दीप्तौ । टक धावने । तेल विस्फोटादिदंशे । तोष तोषे । दोर गतिचातुर्ये । नाँप दीप्तौ । नील हरितीभवने । पिस पाकेन बहिर्निःसरणे । पेड निर्यासे । पोर पर्याप्त्यनार्द्रत्वयोः । प्रार समीक्षणे । फब प्रशस्तीभवने । फर स्तेये । फल वस्त्रजीर्णने । फुह फुश अन्तःकोपे । फेर भ्रमणादिषु ।

फोर स्फुरणे । बाद प्रबलीभवने । बास भासने । बुड स्थविरीभवने । ब्रज़ दीप्तौ । याप व्याप्तौ । रम्ब शोभायाम् । रस सरसीभवने । रोच़ रोचने । रोट अवष्टम्भे । रूड रूढीभवने । रूण जीर्णने । ल्यड पराजयीभवने । लोर वैकल्ये । इत्यादयः कूच़ादयः ॥

## च़रादयः ॥ ८।१।४५ ॥

च़र अन्तःकोपे । फ्रश फुह अमर्षे । मर्च़ अन्तःकोपे । वुच़ दग्धीभवने । फिच़ विस्मरणे । इति च़रादयः ॥

## तिह्रादयः ॥ २।३।१ ॥

तिह् । यिह् । क्याह् । इह् । हुह् । इति तिह्रादयः ॥

## मूलादयः ॥ २।१।३५ ॥

मूल् । कस्तूरु । कूटु । चूँटु । छूल् । टूरु । ड्रुरु । डूस् । तूरू । दूरू । नस्तूरु । बूथु । मूरू । रूद् । लूख् । लूदुर् । लूबर् । हूँट् । सूर् । हूस् । इत्यादयो मूलादयः ॥

इति श्रीशारदाक्षेत्रभाषाव्याकरणे कश्मीरशब्दामृते गणपाठः समाप्तः ॥

समाप्तं चेदं साङ्गं कश्मीरशब्दामृतं नाम व्याकरणम् ॥

मुदे भूयात्सताम् ॥

# ADDITIONS AND CORRECTIONS.

| P. | L. | For | Read. |
|---|---|---|---|
| 2 | 3 | इश्वरकौळ | ईश्वरकौळ |
| 7 | 12 | पट्टु | प॑ट्टु |
| 11 | 13 | कळ्ळून् | क॑ळ्ळून् |
| 13 | 3 | सूतिन् | सू॑तिन् |
| 17 | 1 | अन् | अत् |
| 19 | 15 | करिज़ि | क॑रिज़ि |
| 20 | 6 | दपिज़ि | द॑पिज़ि |
| 26 | 14 | तत्रेदानन्तिन | तत्रेदानीन्तन |
| 30 | 1 | वत्च | वत्च् |
| ,, | 9 | बा॑यिस | बा॑यिस् |
| 37 | 13 | सामान्य संज्ञायाः | सामान्यसंज्ञायाः |
| 40 | 10 | युस् यः | युस् । यः |
| 41 | 14 | अमि | अ॑मि |
| 42 | 9 | वनुथ् | व॑नुथ् |
| 46 | 14 | तसं॑न्दुय, सं॑न्दुय् | तसं॑न्दुय्, सं॑न्दुय् |
| ,, | 19 | गाटुलुय् | गाटुलुय् |
| 57 | 2 | मा॑रू | मा॑रू [सू० २।१।१८] |
| 59 | 15 | कछलादि | कळ्लादि |
| 84 | 17 | कत्यती | कत्यनी |

# ADDITIONS AND CORRECTIONS.

| P. | L. | For | Read. |
|---|---|---|---|
| 91 | 9 | चाँगिल्थ् | चाँगिल्थ् |
| 93 | 15 | मा॑र्बल् | मा॑र्बल |
| ,, | 16 | क्रूरिबल् | क्रूरिबल्[क्रीरिबल्] (क्रूरि... is the form given in th... Ms. but is incorrect.) |
| 108 | 2 | धातु पाठः | धातुपाठः |
| 122 | 12 | After this line, insert [ अ भा। छुक। वाङ्नैर्बल्ये (सू० ६।२।९) ] | |
| 133 | 16 | After this line, insert [ अ क। निव। उल्लङ्घने (सू० २।१।२३) ] | |
| 141 | 16 | For बं॑न | Read बन |
| 148 | 3 | रं॑ङ्ग | रङ्ग |
| 150 | 3 | लताघाते | लत्ताघाते |
| 153 | 6 | पत्र | वष |
| 156 | 13 | *Dele* अ क | |
| 180 | 6 | For छुम् | Read छुम् |
| 194 | 3 | कं॑रुव | कं॑रुव ( which... more correct ). |
| ,, | 9 | ळीखिव | ळी॑खिव (whic... is more correct |
| 213 | 9 | वर्जधित्वा | वर्जयित्वा |
| 218 | 16 | गंडून् | गंडून् |
| 236 | 19 | नां॑म्प | नाँ॑प |
| 272 | 6 | चूँट | चूँट |
| ,, | 7 | चूँठ् | चूँद् |
| 278 | 11 | खरच | खर्च |

